# न्यायादर्शः

नवीनरीत्यनुसारि सुगमं

न्यायप्रकरणम् ।

श्रीदामोदर-महापाल-शर्मणा

वेदकर्मकाण्डविद्यालयाध्यापकश्रीजगन्नाथदेव-

पुरोहितायुर्वेदोपाध्यायविद्याविनोद-

काव्य मीमांसा स्मृतितीर्थो-

पाधिमालामण्डितेन

प्रणीतः प्रकाशितश्च ।

मूल्यम्—सपादं रूप्यकमात्रम् १।०

# NYAYADARSHA

( NYAYA made easy according to new method )

*By*

**Pandit Sri Damodar Mahapatra Shastri.**

*Ayurvedaupadhyaya, Vidya Vinoda Kavya Mimansa Smrutithirtha Professor Veda Karmakanda Vidyalaya, Puri—High Priest of Lord Jagannath*

Published by

**The author**

*Puri (Orissa)*

**1941**

Price—One Re Four Ans. Only.

# DEDICATION

—o—

By kind permission this little book Nyayadarsha is most respectfully dedicated to Mr M N Basu M A District Magistrate and Collector of Puri as a sincere and spontaneous expression of the author's genuine love and admiration for his varied gifts many sided virtues most unostentatious and unassuming nature and manners love and regard for and devotion to the ancient Sanskrit lore thought provoking and scholary attainments genial amiable and generous disposition soul touching conduct and commanding personality

**Pt Sri Damodar Shastri,**

*A U V V K M S T*

*& Priest of Lord Jagannatha*

**Author**

# मुखबन्धः

जगत्पितु परमकारुणिकस्य श्रीजगन्नाथदेवस्याचिन्त्यापरिमित-शक्तेर्जगदम्बाया श्रीदक्षिणकालिकायाश्चापारकृपयातिदुरूहेप्वात्मतत्त्व प्रतिपादकत्वेन मोक्षात्मक परमपुरुषार्थलाभसाधनेषु न्याय-वेदान्तादि-षड्विधास्ति कदर्शनेषु वेदान्तदर्शनमतमनुसृत्य "वेदान्तमञ्जूषा" सांख्यदर्शनमतमनुसृत्य सांख्यतत्त्वदीपिका" वैशेषिकादिदर्शनमत-मनुसृत्य "न्यायादर्श" पातञ्जलादियोगदर्शनमतमनुसृत्य च "योग-तत्त्ववारिधि"श्चेति ग्रन्थचतुष्टयं मया निरमायि। तेषु वेदान्तमञ्जूषा' 'न्यायादर्श'श्चेति ग्रन्थद्वय प्रकाशतामगात्। अन्यग्रन्थद्वयस्य मुद्रण-कर्म भगवदिच्छाधीन तिष्ठति। तत्तद्दर्शनशास्त्रेषु सत्स्वपि बहुषु ग्रन्था न्तरेषु मत्पुस्तकेषु को वा विशेष इति चेदुच्यते—प्रथम योगप्रभावेण सकलवस्तुतत्त्वसाक्षात्कारिभि कालदर्शिभिर्व्यासादिमहर्षिभी रचितानां तत्तद्दर्शनसूत्र ग्रन्थानां बहुगभीरार्थपूर्णाल्पाक्षरविशिष्टतया तेभ्यस्तदा-नीन्तनीनां सूक्ष्मबुद्धिव्यक्तीनामेव विषयबोधोऽभूत्, किन्तु कालक्रमेण लोकानां ततो विषयग्रहाभावेन तत्परवर्त्तिभि पण्डितवर्यैर्भाष्याद्या-कारेण तत्तद्दर्शनेषु विविधग्रन्था अपि लिखिता। तेषामपि ग्रन्थानां पाण्डित्यपूर्णशैलतयातिकाठिन्यात्साम्प्रतिकानां कोमलमतीनां छात्राणां तथान्येषामपि दर्शनशास्त्रपिपाठिषूणां कृतेऽतिदुर्बोधात्तत्पठनपाठनतस्ते प्रायो विरमन्ति। दर्शनशास्त्रज्ञानमन्तरेण तदितरेषु व्याकरणसाहित्यायु-र्वेदादिसकलशास्त्रेषु छात्राणां सुपाण्डित्यं कथमपि न जायेत। तेषु वेदप्रधानग्रन्थानां प्रायो दार्शनिकभावासम्वलितत्वात्। साम्प्रतं

तेषां क्लिष्टताभिया केऽपि तानि नैव पठन्ति, यदि वा केचन तत्पठने प्रवर्त्तन्ते तेऽपि "छागजलप्रवेश"न्यायेनैव। नाद्यावधि कश्चिदीदृश-ग्रन्थो दृष्टिगोचरीभवति यद्ग्रन्थाध्ययनतोऽल्पक्लेशेन सुकोमलमतीनां छात्राणां प्रथमं स्थूलतस्तत्तद्विषयकज्ञानं सम्पद्येत, पश्चात्कठिनग्रन्थ पठनसहायतालाभोऽपि भवेत्। इति कृत्वा केषांचिद्देशहितैषिणां सहृदयानां प्रेरणयाऽनायासेन गुरुनैरपेक्ष्येणापि संस्कृतभाषाभिज्ञानां छात्राणां तथान्येषामपि दर्शनशास्त्ररसिकानां सुखबोधायातिसरल संस्कृतभाषया प्रश्नोत्तरशैल्या नूतनसरणीमनुसृत्य च प्रोक्तग्रन्था मया लिखिताः। एषु ग्रन्थेषु प्रत्येकं तत्तद्दर्शनमतानि, तत्तद्दर्शनोक्तपदार्थाः, तेषां लक्षणानि, तेषां व्याख्या, लक्ष्येषु लक्षणसमन्वयः, शास्त्रीयोदाहरणानि, क्वचिल्लौकिकोदाहरणानि, स्थलविशेषे वैज्ञानिकयुक्तिः, गीतोपनिषदादिवाक्यानां स्थानानि तथा सरलव्याख्या च सन्निहिता सन्ति। एवैकशोग्रन्थाध्ययनेन बहुग्रन्थाध्ययनयोग्यतापि जनिष्यत इत्याशासे। उत्तरश्रवणकाले उत्तरदातृवाक्यघटकान्यान्यग्रन्थगत विषयाणामपि बुभुत्सया पुनः प्रश्नेनान्तरा तेन तत्रैव तेषां निर्वचनात्। एषां ग्रन्थानामुपादेयताविषये देशान्तरविदुषां प्रशंसापत्राणि सन्ति, तेषु पत्रद्वयमत्र निहितमस्ति। किं बहुना स्वग्रन्थोपादेयताप्रकटनं स्वमुखेनाशोभनम्। ग्रन्थपाठकैर्निर्मत्सरैर्विद्वद्भिः स्वयमेव ज्ञातुं शक्यत्वात्। एवं ग्रन्थानां सर्वत्र पठनपाठनेन लोका उपकृताश्चेत्तर्हि मम परिश्रमादीनां साफल्यमस्य इति।

श्रीदामोदरशास्त्री।

# विशेषविज्ञप्तिः

प्रमाणप्रमेयपरिच्छेदद्वयघटित मामकीनेऽस्मिन् "न्यायादर्शे"-ऽसावधानतावशेनैव प्रमाणपरिच्छेदान्तर्गताया ११० पृष्ठागतद्वाविंशपङ्क्तेरारभ्य ११७ पृष्ठागतद्वितीयपङ्क्त्यन्तर्गतविषया प्रमाणपरिच्छेदारम्भस्थानगता बोध्या । क्षमाशीलेषु पण्डितवर्गेषु सविनयं प्रार्थये यद्वारान्तरमुद्रणदशायामेव त यथास्थाननिविष्टा भविष्यन्ति । अशुद्धिबोधे तु शुद्धिपत्रनिरीक्षणेन पठितव्यमिति मेऽनुनय ।

## कृतज्ञताज्ञापनम् ।

वि उ स शि विभागसुपरिण्टण्डण्ट ईश्वरोदत्तदीर्गादत्ति-शालि एम्, ए एम्, ओ एल, कालिकापत्तनस्थसंस्कृतमहाविद्यालय न्यायशालाध्यापकमहामहोपाध्यायश्रीकालीपदतर्काचार्यप्रमुखा ये ये सहृदया विद्वांसो मत्पुस्तकाना विषय प्रशंसापत्राणि प्रादुस्तेषु प्रथम-स्यात्मसद्गतिमीश्वर प्रार्थये तदितरेभ्यश्चोदाराशयेभ्य कृतज्ञतादिक ज्ञापये ।

भद्रकनिवासिन स्वर्गतस्य रायबाहादुरभास्करचन्द्रमहापात्रस्य सत्पुत्र श्रीश्यामसुन्दरमहापात्रो 'न्यायादर्श' मुद्रणे आर्थिकार्थ-साहाय्य कृतवान् तत्प्रधानसचिव श्रीगोपीनाथमिश्रशर्मापि तदानु कूल्य प्रकटितवानिति तत्पितुरात्मसद्गतिकामनया सहैवाम्य महाशयस्य तत्सचिवस्य चोत्तरोत्तराभिवृद्धिकामनया शुभाशी प्रदानादिना च स्वात्मन आनृण्य चिकीर्षामि ।

उत्कलवर पुत्रश्रीचैतन्यदेवसम्मानितेन तस्मादेव 'अतिवडी'-स्युपाधिभाजा भक्तप्रवरेण श्रीजगन्नाथदासेन स्थापितस्य पुरीवृहदुत्कलमठस्याधिपति र्ब्रह्मचर्यनिष्ठो देवब्राह्मणसाधुभक्त सत्कर्मरतो मद्वाल्यबन्धु श्रीवृन्दावनदासगोस्वामिमहोदय प्रथममेव मा ग्रन्थलिखने प्रोत्साहितवानिति महोपकारिणे तस्मै शुभाशि प्रदान पूर्वकमैहज्यायुत्तरोत्तराभिवृद्ध्यादिक कामये ।

महिस्त्रिनभूमिकाया आङ्गलभाषानुवादेऽवसरप्राप्तो डिपोटिमाजिष्ट्रेट श्रीगोपीनाथनाशशर्मा, मुद्रणपत्रसंशोधने चानेकदा पु० स० म० विद्यालयस्य यथारूत्य न्यायव्याकरणशास्त्राध्यापकौ श्रीमन्तौ राम कृष्णचिन्तामणिमिश्रौ च सहायतामाचरितवन्त इति तेभ्यो धन्यवादा अर्प्यन्ते ।

पुरीराजगोपालमठाधिपति कैशरहिन्द श्रीगदाधररामानुज दासमहोदयो मामकीनेऽस्मिन् कर्म्मण्यशताऽप्यर्थसहाये प्रतिज्ञातवानिति पुष्कलदातुस्तस्य पुरषायुपजीवित्व कामये ।

भक्तवररघुनाथस्थापितराघवदासमठाधिपतिर्देवब्राह्मणसाधुभक्त श्रीरमानाथरामानुजदासोऽपि ग्रन्थान्तरमुद्रणादौ मा भूयोभूय प्रोत्साहयत्यर्थसहायतायामप्यानुकूल्य प्रकटयतीति शास्त्रानुरागिणस्तस्य दीर्घजीवित्वादिकमर्थये ।

उत्कल्याजपुरवास्तव्यो रा० सा० जमिदार श्रीनरसिंहमहापात्र चौधुरी महाशयेऽस्मिन् कर्मण्याशिकार्थसाहाय्ये स्वत प्रतिश्रुतवानिति गुणग्राहिण सहृदयस्य तस्य दीर्घायुष्ट्व कामये ।

कालिकापत्तनार्गतकाशीपुरस्थ पाइकपाडा' त्रिदिवाखण्डलो विपुलधनिकत्वेऽपि गर्वशून्य पाश्चात्यभाषापण्डितोऽपि प्राच्यभाषा-

रसिको धर्मपरायण श्रीमान् विमलचन्द्रसिंहस्तत्प्रधानसचिव श्रीअनङ्गकुमारमुखोपाध्यायश्च मामकेऽस्मिन् कर्मणि परोक्षेऽपि सहायतामाचरितवन्ताविति मातृदारभ्रातृपुत्रसहितस्य राज्ञ, तन्मन्त्रिणश्च शतायुष्ट्वादिकं निरन्तरमर्थये ।

पुरीस्थश्रीजगन्नाथदेव मन्दिराध्यक्षो गङ्गवंशावतंसो नृपकुलमुकुटमणिर्गजपतिमहाराज श्रीश्रीश्रीरामचन्द्रदेववर्मा मामकीनग्रन्थेषु तत्प्रदत्तसम्वलितान्यतमग्रन्थस्य मुद्रणसाहाय्यप्रदानानुमतिं प्रकाश्य पुनर्ग्रन्थान्तरनिर्माणे मां प्रोत्साहयतीति गुणग्राहिणे दारपुत्रादिसहिताय तस्मै शुभाशीर्वादा अर्प्यन्ते ।

परिशेषे निर्मत्सरेषु परगुणपरमाणुपर्वतीकृत्सु सहृदयपण्डितवर्गेषु मामकीनं सविनयप्रार्थनमिदं यन्मदीयबुद्धिमान्द्यात्प्रमादादिनायसाक्षरयोजकदोषेण वा यद्यस्मिन् ग्रन्थे कुत्रापि स्थले कश्चिद्विषयगतदोषो भाषागतदोषोऽन्य कश्चिद्दोषो वा तेषां दृष्टिगोचरीभवेत्तर्हि तैरवश्य पत्रद्वारा ऽहं विज्ञाप्यो येन प्रकारान्तरमार्जनद्वारा तत्परिशुद्धौ चेष्टिष्ये ।

सहृदयविधेय

**श्रीदामोदरशास्त्री ।**

———

pletly annihilated, and that its annihilation means Mukti or eternal bliss They have shewn the means by which man can cast off his inherent ignorance True, they have traversed different ways and advanced different arguments in support of their respective theories, but their ultimate object is the same, viz —the showing of the path that leads to Mukti

This book entitled the 'Nyayadarsa' is based on the Vaisesika system of Hindu philosophy This system is also known as Aulukya or Kanad system because Uluka—a Brahmin of the Kasyapa Gotra, brought it into being as a result of his long devotion to Lord Siva during which he lived only upon particles of rice or, as some say upon husks It is called Vaisesika as Visesa ( particularity ) is accepted in it as one of the categories It is a very old system The name Uluka appears in the Santi Parba of the Mahabharat which is not less than 2500 years old[1] Its atomic theory has been freely attacked in the Vedanta which was in existence long before the Christian era and in some Buddha works which were written after the death of Lord Buddha in or about 477 B C There can, therefore, be not doubt about the antiquity of the system

1 Vide Santi Parba—Ch 47 Sloke 11 which runs as follows :—' Uluko paramo bipro markandeyo mahamunih "

Goutam or Aksapada the founder of the Nyaya system, and Uluka the founder of the Vaiśesika system may be contemporaries as they were the 1st and the 3rd disciples respectively of Somesarma an incarnation of Siva[2] To quote the words of Sir S Radhakrisnan their systems represent the analytic type of philosophy and uphold common sense and science instead of dismissing them as moon beams from the larger lunacy[3]

Both of them admit the existence of God, nature and the individual souls But their systems are distinguishable from each other While the Nyaya school is concerned with the world within the Vaiesika school devotes itself to the examination of the world outside

The Vedant system of Badarayan Vyasa is purely monistic. According to it God or Brahma is the only reality and that the nature and individual souls are His modifications Sankar and Ramanuja are the two great commentators of this system. It is no place to expound Sankar's doctrine

---

2 Vide Jatukarnyo Yada Vyaso bhab syati tapodhanah
Tadapyaham bhab shyami Somasarma dwijottamah
Aksapadah Kumarascha Uluko Vatsa eb cha
Tatrap mamate śsya bhabisyanti tapodhanah
(Linga Puran—Ch 24)

3 Indian Philosophy Vol 2 p 29

# INTRODUCTION

Man is essentially a spiritual being but due to his inherent ignorance he often forgets himself, and is unable to look at the world in its true perspective He is always in quest of happiness but continuous happiness is denied to him until he gains eternal life His good deeds bring him happiness and bad ones pain But his happiness is transitory Even if he attains heaven as a result of his good deeds he falls back into the world when the fruits of the deeds are enjoyed[1] Inspite of the dictates of his inward monitor-his conscience-he often swerves from the right path, and finds himself engulfed in pain For the enjoyment of the fruits of his deeds he passes through endless evolutions of life in other words his life remains bound up with saṁsara or "the weary wheel of endless becoming' Moved at this pitiable sight the great religious preachers and philosophers of the world have laid it down that eternal bliss should be the goal of man The philosophers in their different systems of philosophy having taken up pain as the subject matter of their discourse have proved by various methods that it can be com

1 Te tam bhuktwa s vargalokam bisalam
Kṣine punye martyalokam b santi
The Srimad Bhagabad G ta—Ch 9 Sloka 21

pletly annihilated, and that its annihilation means Mukti or eternal bliss They have shewn the means by which man can cast off his inherent ignorance True, they have traversed different ways and advanced different arguments in support of their respective theories, but their ultimate object is the same, viz —the showing of the path that leads to Mukti

This book entitled the 'Nyayadarsa' [redacted] based on the Vaisesika system of Hindu philosophy This system is also known as Aulukya or Kanad system because Uluka—a Brahmin of the Kasyapa Gotra, brought it into being as a result of his long devotion to Lord Śiva during which he lived only upon particles of rice or as some say upon husks It [redacted] called Vaiśesika as Viśesa ( particularity ) is accepted in it as one of the categories It is a very old system The name Uluka appears in the Santi Parba of the Mahabharat which is not less than 2500 years old[1] Its atomic theory has been freely attacked in the Vedanta which was in existence long before the Christian era and in some Bauddha works which were written after the death of Lord Buddha in or about 477 B C There can, therefore, be not doubt about the antiquity of the system

1 Vide Santi Parba—Ch 47 Sloke 11 which runs as follows :—' Uluko paramo bipro mārkandeyo mahāmunih "

Goutam or Aksapāda the founder of the Nyāya system, and Ulūka, the founder of the Vaiśesika system, may be contemporaries as they were the 1st and the 3rd disciples respectively of Somesarma-an incarnation of Śiva[2] To quote the words of Sir S Rādhakrisnan, their systems represent the analytic *type of philosophy, and uphold common sense* and science, instead of dismissing them as "moonbeams from the larger lunacy[3]"

Both of them admit the existence of God, nature and the individual souls But their systems are distinguishable from each other While the Nyāya school is concerned with the world within, the Vaiśesika school devotes itself to the examination of the world outside

The Vedant system of Bādarayan Vyāsa is purely *monistic According to it*, God or Brahma is the only reality and that the nature and individual souls are His modifications Sankar and Ramānuja are the two great commentators of this system It is no place to expound Sankar's doctrine

2 Vide Jitūkarnyo Yadā Vyāso bhabisyati tapodhanāh,
Tad ipyaham bhabishyāmi Somasarma dwijottamah
Aksapādah Kumārascha Uluko Vatsa eb cha,
Tatrapi mamate sisya bhabisyanti tapodhanah
( Linga Puran—Ch 24 ).

3 Indian Philosophy Vol 2 p 29

of Absolute Monism or his theory of Illusion or Ramanuja's doctrine of Qualified Monism Suffice it to say that according to one individual souls attain Mukti or are absorbed in God when they get over Maya by their spiritual training and according to the other they attain Mukti or a state of eternal bliss by *bhakti* or devotion to God

The Samkhya system of Kapil which is considered to be the oldest of all the systems of Hindu philosophy is purely atheistic. It recognises plurality of souls and lays down that these souls may attain salvation by a proper understanding of its twenty-five principles the soul the evolvent or the root evolvent ( Prakriti ) the great one egoism etc. The main doctrine of this system is that the creation is formed by the union of nature and soul that the unintelligent nature acts for the liberation of soul and that soul attains final bliss when nature withdraws herself from it

The Patanjala Darsan or the Yoga Sastra accepts the twenty five principles of the Samkhya and adds the Supreme Being as the twenty-sixth It lays down rules for concentration meditation attention etc. and expounds the highest end Emancipation. According to it the connection between Soul and Nature is the cause of all the woes of the soul This existance of ours, full of pain is what

is to be escaped from ; the connection of the nature and the soul is the cause of our having to experience this existence the absolute abolition of this connection is the escape and right insight is the cause thereof[1]

We now return to our main subject the Vaiseshika system It lays stress on the fact that man's right knowledge of the soul and the objects of nature ultimately brings him absolute liberation from all pain which is another name for Mukti According to it all things come under two main divisions viz (1) existence and (2) non existence Again those that come under the first division fall under six positive categories viz—substance quality action generality particularity and intimate relation Non existence or want of existence is the seventh category It is divided into relative non existence[2] and reciprocal non existence[3] and of these two the former is divided into antecedent[4] emergent and absolute One may wonder how non existence can be a category But when we consider that non existence of all pain is Mukti there will no longer be any cause for wonder There were several commentaries on this system But in course

1 The Sarva darsan Samgraha translated by Professors E B Cowell M A & A E Gough M A P. 2

of time most of them have been lost to the world At present importance is attached to these two commetaries, viz —the Padartha Dharma Samgraha by Prosasta Padacharya and the Vaiśesika Sūtropascar by Sankar Miśra. On the Padartha Dharma Samgraha there are two explanatory notes, viz —the Nyaya Kandali by Śridharachārya and the Kiranabali by Udayanacharya. Of these Śankar Misra's Upascar has earned an unrivalled name After a careful study of these, I have written this Nyāyādarsa. Absolute escape from pain is its subject matter It has been completed in two chapters The first chapter is devoted to the things to be proved, and the second, to the proof thereof. In the first chapter while dealing with the things to be proved, I have made special discussions of the subjects—God, atoms, adrista, soul, rebirth, and the Vedas etc With a view to widen the scope of the knowledge of the students I have given here and there popular illustrations and scientific examples I have pointed out the places occupied by quotations from the Upanishad and the Gita that support the Vaiśesika theory and have explained them in simple Sanskrit With a view to make the book interesting, causes of earth quake, rain-fall formation of steam, ice and hail stone from water, liquidity, thunder, production of fire in the forest etc., uprising of the

flames, movement of the air and the entry of the mind from one body into another, and other similar subjects have been clearly explained in the 1st chapter. In the 2nd chapter the four kinds of proofs viz — perception, inference, analogy and testimony have been fully discussed Technical terms have also been made easily intelligible

In short, I have tried to make the book useful and interesting How far I have succeeded in my attempt, it is for the readers to judge I have done my best to make it free from mistakes If, however, any mistake is detected, it is my earnest request that it may be intimated to me, so that it may be removed in due course

Students of Philosophy while studying the original works and the standard commentaries on them sometimes look for easier hand books dealing with the subject of their study So far as the Samkhya, the Vedanta, the Joga and the Vaiśesika systems are concerned, I would request them to refer to the following books of mine as well as to the Nyayadarsa which, it is hoped, will serve their purpose —

(1) The Samkhyatattva Dipika.

(2) The Vedanta Mañjusa.

Lastly, my labour will be amply rewarded if by reading these books the students of Philosophy derive any benefit whatsoever

PANDIT SREE DAMODAR SASTRI
*Ayurvedopadhyaya Vidyavinod, Kavya-Meemansa Smruti Tirtha*
*Priest of Lord Jagannath Puri (Orissa)*

# सूचीपत्रम्

---

## अथ प्रमाणपरिच्छेदः

( ११० पृष्ठागतद्वाविंशपङ्क्तरारभ्य ११७ पृष्ठास्थद्वितीयपङ्क्तिपर्यन्त विषया प्रमाणपरिच्छेदान्तर्गता ज्ञया )

अथोपमानखण्ड

| अशुद्धिः | शुद्धिः | पृष्ठा | ंक्तिः |
|---|---|---|---|
| पुनरस्य | पुनरस्या | २४ | ८ |
| पुञ्जस्यैवं | पुञ्जस्यैव | ३१ | ६ |
| शाद्वोचारणेन | शाद्व ज्ञानयद्व | ३४ | ४ |
| स्थलवायु | स्थूलवायु | ४६ | १८ |
| प्रवेशनिर्ग्मो | प्रवेशनिर्गमौ | ४८ | २३ |
| मनांस्पव | मनांस्येव | ५२ | २ |
| मृव्यत्व | मृव्यत्वं | ५३ | २३ |
| स्पन्दनावि- | स्पन्दनवि- | ५४ | ६ |
| कालिकाति | कालाति- | ५५ | १९ |
| पूर्वो | पूर्वा | ५६ | १ |
| स्वसयोग- | स्वसंयोग- | ,, | १६ |
| कस्मिंचित | कस्मिंश्चित् | ६१ | २ |
| त्रिकालदिर्शि- | त्रिकालदर्शि- | ६२ | १ |
| किमपि | किञ्चित् | ६४ | १७ |
| अङ्गीकर्त्तव्यं | अङ्गीकर्त्तव्या | ६७ | ८ |
| शरीरमल- | शरीरमवल- | ६८ | ७ |
| ईहनाप्र- | ईहनाप्र- | ,, | १८ |
| यैयकत्व- | यैवैकत्व- | ७८ | ३ |
| मायैव | माद्रायैव | ९२ | ५ |
| ग्रुतत्वस्तकर्मव्यवहारस्य | ग्रुतत्वव्यवहारस्य | ८८ | १९ |
| पदायषु | पदार्थेषु | ९३ | ११ |
| अनुमितिस्व- | प्रत्यक्षानुमितिस्व | १०७ | २१ |
| उपमितिस्वरूपश्रमिति | उपमितिरिति | | |

| अशुद्धि | शुद्धि | पृष्ठ | पंक्ति |
|---|---|---|---|
| अशु | अक्षु | १०० | ११ |
| संयोग | सयोगादिरूप | ११० | २३ |
| ( वा ) | ज्ञानविशेषात्मकापत्तिरूपा वा | ११२ | १३ |
| तदुभयजातिवृत्ते | तथाविधजातिवृत्ते | १२८ | १२ |
| स्वरूपव | स्वरूपैव | १३२ | १५ |
| चतावता | वैतावता | ,, | २२ |
| सस्थानभेदेनैव | निरवयवत्वेनैव | १३५ | १४ |
| गौतमादिभिर्नाङ्गीक्रियते | गौतमेनाप्यङ्गीक्रियते | १३६ | १६ |
| अन्यथासिद्धा | अन्यथासिद्धानि | १४२ | १८ |
| सधर्मान | सधर्माण | १४९ | २ |
| क्रमत सम्मिलित - | परमाणुक्रमसम्मिलित | १४९ | १९ |
| वैकीक | वैकैक | १९२ | ४ |
| मदादि- | मस्मदादि | १९३ | १२ |
| योगसाधन | भोगसाधन- | , | १५ |
| परामर्श एव | परामर्शोऽप्य- | १९६ | १९ |
| वा हेतुहेतुवाक्य | हेतुवाक्यं | १६१ | २० |
| स्तदन्ये | स्तदन्यस्मिन् | १६३ | १७ |
| तथा | ० | १७१ | २१ |
| कलिङ्गदक्षिणशब्दद्वो० | कलिङ्गदक्षिणशब्दयो० | १८३ | २१ |
| वत्मन्तनै० | वत्यन्तनै० | १८४ | १३ |
| पूर्वोक्तोदादरणेषु | पूर्वोक्तोदाहरणेषु | ,, | १७ |
| गङ्गाकलिङ्गादिशब्दयो | गङ्गाकलिङ्गादिशब्दाना | ,, | १८ |

ग्रन्थसमाप्ति

—— ॥ ——

# शुद्धिपत्रम्

| अशुद्धि | शुद्धि | पृष्ठ | पंक्ति |
|---|---|---|---|
| | आसीत्किल | १ | २ |
| अनित्यत्वात् | अविनाशित्वात् | ३ | १७ |
| बुद्धिनिरसन | बुद्धिनिरसनम् | ३ | १८ |
| अनित्यत्वे | अविनाशित्व | ४ | ४ |
| स्वर्गादिर्भोगेन | स्वर्गादिभोगेन | ४ | १३ |
| ह्यभ्रवै | ह्यध्रुवै | ४ | २० |
| नित्यत्वम् | अविनाशित्वम् | ५ | ३ |
| निशति | विश- | ५ | ८ |
| नित्यत्व | अविनाशित्व | ,, | २१ |
| ई—दिनैव | ई—दिनापि | ६ | ४ |
| सत्त्वत्रह्म० | सत्त्वब्रह्म० | ६ | १७ |
| महेश्वरस्य | सेश्वरस्य | ७ | २ |
| साक्षाद्विधयश्वरान— | साक्षाद्विधयश्वर | ,, | १३ |
| आत्मन सयोगस्येन | आत्मन सयोगस्य | ८ | ३ |
| — | सदरित व प्रतिपादितम् | ८ | १६ |
| सौत्र्याय | सौक्ष्याय | ९ | ५ |
| पदार्थेषुमस | सप्तपदार्थेषु | १५ | २ |
| अन्धकारस्यातार्किक० | अन्धकारस्य तार्किक० | २३ | ९ |
| श्राद्ध० | श्राद्धप- | २३ | १६ |

| अशुद्धि | शुद्धि | पृष्ठा | पंक्ति |
|---|---|---|---|
| ध्यात्मका- | ध्यात्मका- | | |
| पृ १९१श प २०शौ | | १९१ | २१ |

यत्र सम्बन्धिनोर्मध्ये एकस्य सम्बन्धिनो ज्ञानमपरसम्बन्धिस्मारक भवत्येव "हस्तिहस्तिपकन्याय"। तयोरेकतरस्य सद्दर्शनेनापरस्य स्मरणात्।

I feel it a pleasure to certify that Pandit Damodar Shastri, Ayurvedopadhyaya, Vidyabinod, Kavya-Mimansa Smriti-tirtha, Priest of Lord Jagannatha, Puri Orissa, has been known to me for a long time He has written 4 books namely "Nyayadarsa", "Sankhya-Tattwa-Dipika", "Vedanta Manjusa" and "Yogatattwa-Bandhu" I had an opportunity to go through these books The special feature of these books is that they have been written in a very simple language in a dialogue form which is sure to be a great asset to the readers Philosophy has not yet been written in this form in Sanskrit

I shall be glad if he gets pecuniary assistance to enable him to publish those books

**Sd Kalipada Tarkacharyya**
*( Mahamahopadhyaya, )*
*Lecturer ( Nyaja Shastra )*
*Sanskrit College, Calcutta*
Dt 9 6-1941
Cant —Puri

I feel it a pleasure to certify that Pandit Damodar Shastri, Ayurvedopadhyaya, Vidyabinod, Kavya-Mimansa-Smriti-tirtha, Priest of Lord Jagannatha, Puri Orissa, has been known to me for a long time He has written 4 books namely "Nyayadarsa", "Sankhya-Tattwa-Dipika", "Vedanta Manjusa" and "Yogatattwa-Bandhu" I had an opportunity to go through these books The special feature of these books is that they have been written in a very simple language in a dialogue form which is sure to be a great asset to the readers Philosophy has not yet been written in this form in Sanskrit

I shall be glad if he gets pecuniary assistance to enable him to publish those books

**Sd Kalipada Tarkacharyya**
*( Mahamahopadhyaya, )*
*Lecturer (Nyaya Shastra )*
*Sanskrit College, Calcutta*
**Dt 9 6-1941**
**Cant —Puri**

Ayurvedopadhyaya Vidyavinoda Pandit Shree Damodar Shastri Kavya Mimansa Smriti Tirtha Priest of Lord Jagannatha, Puri, has been known to me for a long time He has composed Nyayadarsa Sankhya Tattwa Dipika and 'Vedanta Manjusa' I am sure these books when published will prove an efficacy in Sanskrit and enable their readers to form a general idea of Nyaya Sankhya and Vedanta Philosophy I shall be exceedingly cheered up if he gets pecuniary assistance to enable him to publish the said books

**Sd I D Dourga Datti Sastri**
*M A M O L*
*Supt Sanskrit Studies*
*Bihar and Orissa 11 1 33*

# न्यायादर्शः

## ग्रन्थारम्भे मङ्गलाचरणानि

येनाधायि स्वमूर्ध्नि स्थलनलिनमिवोष्णीषबद्धाप्रयासं,
सप्तद्वीपाद्रितुङ्गोदकनिधितटिनीपूर्णभूचक्रमेतत् ।
येन स्वक्रोडशाय्यासुखशयनरुचिः श्रीधरोऽकारि नित्यं
सोऽयं नीलाचलस्थः कलयतु कुशलं रेवतीप्राणबन्धुः ॥ १ ॥

ध्रुवो येन क्षीणो ह्युपजनिरघस्तुल्याधिगमितः
पदं प्रोच्चं पित्रा कृतविषमपीडानिचयतः ।
अरक्षि प्रह्लादो जगदवनमातापितृसमो
जगन्नाथः सोऽयं सततमवतान्नोऽत्र कृपया ॥ २ ॥

गुणानां साम्यं या पुरुषमहदाद्यैः स्वगणना
यदास्याः संवृत्तासृजदखिलविश्वं हि निपुणा ।
पुनर्या महाश्रीकनककपधापाणिभवना
सुभद्रा सा पापं दलयतु सुभक्तस्य सुमनाः ॥ ३ ॥

नीलाद्रेर्दक्षभागे जयति हि नितरां दक्षिणा कालिका या
साक्षाद्ब्रह्मस्वरूपा कमलभवहृषीकेशशम्भ्वादिदेवै ।
काम्या श्रीक्षेत्रवर्य्याजनपटुमहिमा राजराजेश्वरी सा
खड्गाद्यै पातु नित्यं दुरितमपि तया हन्तु जान्मान्तरं न ॥४॥

गाम्भीर्य्यौदार्य्यसिन्धु सकलशुभगुणाधार आसीन्महात्मा
ज्येष्ठभ्राता पितुर्मे विबुधगणसमाराधित कृष्णचन्द्र ।
सावित्री चास्य कान्ता भवजनककुलोद्धारिणी पुण्यशीला
श्रद्धार्त्तत्राणसक्तौ स्वजननिजनकौ तौ च भक्त्या प्रणौमि ॥ ५ ॥

श्रीमान् काश्यपगोत्रजो द्विजवरो दामोदराख्य सुधी
श्रीनीलाचलमन्दराख्यहृदे कारुण्यवारां निधे ।
पौरोहित्यपदन सार्थकजनु सद्विप्रवंशोद्भवो
मीमांसास्मृतितर्ककाव्यविदसद्बुद्धिर्मुदा नौति तान् ॥ ६ ॥

श्रीकणादं नमस्कृत्य बालानां हितकाम्यया ।
दामोदरेण धीरेण न्यायादर्शो विरच्यते ॥ ७ ॥

# अथ ग्रन्थावतारः

विविधतीर्थाश्रमदेवीदेवाधिष्ठितत्वेन पवित्रतमभारतभूखण्डावस्थितोत्कलदेशान्तर्गतपुरीमण्डलस्थ 'पट्टयोषित्पुरशासन'मलङ्कुर्वाण सकलशास्त्रनिष्णात सुगृहीतनामा श्रीमान् श्रीकृष्णचन्द्रमहापात्राख्य पण्डितराज । तस्य श्रीगदाधरनारायणजयरामसोमनाथाख्याश्चत्वार पुत्रा आसन् । अथ कदाचित्तेषां परस्पर भवति विविधतर्कपूर्णात्मतत्त्वविषयकसमालोचने तत्र सन्दिहानस्तज्ज्येष्ठपुत्रो गदाधर स्वसन्देहनिवृत्तये निजजनकान्तिक गत्वा कृताञ्जलि सविनयमप्राक्षीत्पूज्यपादा पितर ! शास्त्रष्वेव परिदृश्यते—यद्धर्मार्थकाममोक्षात्मकचतुर्विधपुरुषार्थेषु मोक्षस्यैव परमपुरुषार्थत्वमिति । अत्र सन्दिहानेन मया पृच्छ्यते सत्सु सप्रयोजनेषु पुरुषार्थान्तरधर्मार्थकामेषु मोक्षस्यैव कुत परमपुरुषार्थत्वम् ? तस्य पुन किं स्वरूपम् ? स च कथ सम्भवतीति । तत्प्रश्नश्रवणेनातितुष्टोऽसौ जनकोऽब्रवीत् वत्स ! सकललोकोपकारकत्वेनात्यन्तोपादेयानां त्वत्प्रश्नानामुत्तराण्यत्यायाससाध्यान्यपि तदुत्तरदाने नितरामानन्दिता वय प्रवर्त्तामहे । सावधानेन त्वया श्रोतव्यम् । तदुत्तराणामस्ति काठिन्यात् । तथाहि पुरुषार्थानामपि धर्मार्थकामाना परमपुरुषार्थत्वं न सम्भवति, तेषामनित्यत्वात् । न च मोक्षस्य परमपुरुषार्थत्वमपलपितव्यम्, तस्य नित्यत्वात् । तत्र 'अनात्मभूतदेहेन्द्रियादिष्वात्मबुद्धिनित्यवस्तुभ्य आत्मत्व बुद्धिनिरसनं' 'आध्यात्मिकादित्रिविधदु खानामात्यन्तिक निवृत्तिरेव' वा

मोक्ष । आदिपदेनाध्याधिभौतिकाधिदैविकदु खयोर्ग्रहणम् । धर्म्मज्ञानमन्तरेण तल्लाभासम्भवान्मुमुक्षुभि प्रथम धर्म्मज्ञानायमेव चेष्टितव्यम् ।

पुत्र —महोदया ! तर्हि निगद्यता तावत् कृपया धर्म्मादित्रयाणामनित्यत्वे, मोक्षस्य च नित्यत्वे कि मानम् ? कि च धर्म्मस्वरूपम् ? तज्ज्ञान च पुन कथमुत्पद्यते ?

पिता०—वत्स ! धर्म्मादीनामनित्यत्वे, मोक्षस्य च नित्यत्वे श्रुतीनामेव प्रामाण्यदर्शनात् प्रथम तत्प्रामाण्य प्रदर्श्य पश्चाद्धर्म्मस्वरूप तज्ज्ञानं च प्रकटयिष्यते । तथाहि छान्दोग्योपनिषदष्टमाध्यायप्रथमखण्डषष्ठानुवाके परिदृश्यते—' तद्यथेह कर्मजितो लोक क्षीयते, एवमेवामुत्र पुण्यजितो लोक क्षीयते" इति । लोक्यतेऽनुभूयते य स लोक कर्म्मफलमिह जगति कर्म्मणा कृष्यादिकर्म्मणा जितोऽर्जित सञ्चित इति यावल्लोक शस्यादिर्यथा भोगेन क्षीयते, एवमेवामुत्र परलोके पुण्येन यज्ञादिकर्मणा जित उपार्जितो लोक स्वर्गादिर्भोगेन क्षीयते नश्यतीति तत् श्रुत्यर्थ । "ते तं भुक्त्वा स्वर्गलोक विशाल क्षीणे पुण्य मर्त्यलोक विशन्ती ति भगवद्गीतानवमाध्यायैकविंशश्लोकोक्ते । ते स्वर्गतपुरुषा विशाल स्वर्गलोकं भुक्त्वा स्वार्जितपुण्यक्षयानन्तर पुनर्मर्त्यलोकमायान्तीति गीतावाक्यार्थ । बृहदारण्यकोपनिषत्तृतीयाध्यायाष्टमब्राह्मणदशमानुवाकेऽप्युक्तम्—"अन्तवदेवास्य तद्भवती"ति । अस्य पदार्थतत्त्वज्ञानरहितपुरुषस्य तत् कर्म्मफलमन्तवद्भवति नश्यतीति तच्छ्रुत्यर्थ । कठोपनिषत्प्रथमाध्याय द्वितीयवल्लीदशमानुवाकेऽपि ' न ह्यध्रुवै प्राप्यते हि ध्रुव तद्'"ति । हि यस्मादध्रुवैरनित्यै कर्म्मभि तद् ध्रुव परमात्मा न प्राप्यते इति तत्श्रुत्यर्थ । मुण्डकोपनिषद्द्वितीयमुण्डकसप्तमानुवाकेऽपि परिदृश्यते ' प्लवा ह्येते अदृढा यज्ञरूपा" इति । एते यज्ञरूपा प्लवा भेला ससारसागरोत्तीर्णायादृढा

भवन्तीति तदर्थः । एतच्छ्रुतिवाक्यैर्धर्मानुष्ठानजन्यफलानामनित्यत्व-प्रतिपादनेन तत्कारणीभूतानां तेषामप्यनित्यत्वं निर्णेयम् । मोक्षस्य ■ नित्यत्वमाह तैत्तिरीयोपनिषद्द्वितीयवल्लीप्रथमानुवाकप्रथममन्त्रात्मिका "ब्रह्मविदाप्नोति परं"मिति श्रुतिः । ब्रह्मवित्पुरुषः परं परब्रह्माप्नोति परब्रह्मत्वमापद्यत इति तदर्थः । "न पुनर्मृत्यवे" इति च । पुनर्मृत्युं मोहं प्रमादं वा नाप्नोतीति तदर्थः । "मोहो मृत्युः सम्मतो यः कवीनां प्रमादं वा मृत्युमहं ब्रवीमी"त्युक्ते । छान्दोग्योपनिषत्सप्तमाध्यायषड्विंशतिखण्डद्वितीयानुवाकात्मिका "न पश्यो मृत्युं पश्यती"ति श्रुतिरपि । पश्यतीति पश्यः पदार्थतत्त्वज्ञः पुरुषो मृत्युं मोहं प्रमादं वा न पश्यति नाप्नोतीति तदर्थः । "स स्वराड् भवति, तमेव विद्वानमृत इह भवती"त्याकारकनृसिंहपूर्वतापिन्यामपि १।६ । स पदार्थतत्त्वज्ञ-पुरुषः स्वराट् स्वतन्त्रो भवति कर्माधीनो न भवतीत्यर्थः । "स्वराट् स्वतन्त्रो विशेष्य" इति नैघण्टोक्ते । स परमात्मानमेव जडपदार्थाति-रिक्तमिति विद्वान् जाननिहास्मिन् जन्मन्यमृतो मुक्तो भवतीति तदर्थः । श्वेताश्वतरोपनिषत्तृतीयाध्यायाष्टमानुवाकात्मिका "तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यते अयनाये"ति श्रुतिरपि । स परमात्मानं विदित्वा मृत्युं मोहं प्रमादं चात्येत्यतिक्रामति, अयनाय मोक्षाय अन्यः पन्था अन्योपायो नास्तीति तदर्थः । छान्दोग्योपनिषदष्टमाध्यायाष्टम-प्रपाठकपञ्चमखण्डात्मिका "न स पुनरावर्त्तते" इति श्रुतिरपि । स ब्रह्मत्वमापद्यमानः पुरुषः पुनर्न आवर्त्तते पुनः शरीरधारणं नैव करोतीति तदर्थः । पूर्वोक्तश्रुतिवाक्यैर्मोक्षस्य नित्यत्वं धर्माद्यपेक्षया श्रेष्ठत्वञ्च ■ प्रतिपादितम् । यथा पदार्थानां तत्त्वज्ञानलाभेन जीवः सर्वं मुक्तिं चोपलभते ■ पदार्थाः अत्राग्र ग्रन्थे धर्मपदवाच्याः । वक्ष्यमाणद्रव्यादिसप्तपदार्थानां

पुङ्खानुपुङ्खविचारेण जायमानज्ञानमेव, धर्मज्ञानम्, पदार्थतत्त्वानुसन्धानद्वारैव तथाविधज्ञानोत्पत्तेः।

पु०—पितः! 'धर्मज्ञानादेव मुक्ति'रिति यदुक्तं प्राग् भवद्भिस्तन्मया नाङ्गीकर्त्तव्यम्। ईश्वरोपासनादिनैव मुक्ति'रिति शास्त्रेषु परिदर्शनात्।

पि०—वत्स! न चैवं वक्तुं युज्यते। अस्मिन् वैशेषिकदर्शने धर्मज्ञानजन्यात्यन्तिकदुःखनिवृत्तेरेव प्रतिपाद्यविषयतया कणादमहर्षिणा तत्प्रणीतदर्शनस्य प्रथमाध्यायप्रथमाह्निकोक्ते "अथातो धर्मं व्याख्यास्याम" इत्यात्मकप्रथमसूत्रे अथ मङ्गलानन्तरं "नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छत" इति प्राचीननियममाश्रित्य तत्त्वजिज्ञासुशिष्यगणप्रश्नानन्तरं वा धर्मं व्याख्यास्याम इत्युक्त्वा तत्रैव "यतोऽभ्युदयनिः श्रेयससिद्धिः स धर्म" इति द्वितीयसूत्रे यत्पदार्थतत्त्वज्ञानेनात्यन्तिकदुःखनिवृत्तिर्मोक्षो वा तत्पदार्थ एव 'धर्म' इत्यङ्गीकारात्। इतोऽवगम्यते कणादोक्तद्रव्यगुणकर्मसामान्यविशेषसमवायाभावात्मकसप्तपदार्थानां वक्ष्यमाणसाधर्म्यवैधर्म्यज्ञानद्वारा तत्तत्पदार्थविषयकवैराग्यजननादेव निःश्रेयसं मुक्तिं चोपलभते जीवो नान्यथा। सर्वविधभोगस्तद्यं देहान्तरधारणादिकं च सर्वमदृष्टसापेक्षम्। कर्मानुष्ठानार्थं कर्मजन्यशुभाशुभफलभोगार्थं च शरीरस्यावश्यकतेति।

पु०—पितः! द्रव्यादिसप्तपदार्थानां साधर्म्यवैधर्म्यज्ञानपुरःसरतत्तत्त्वज्ञानलाभादेव 'मुक्ति'रिति स्थितौ मोक्षकारणतयेश्वराभ्युपगमो न सङ्गच्छत इति स्पष्टम्। जगत्कर्त्तृत्वेनापि तस्स्वीकृतेरयुक्तत्वमपि प्रतीयते। "अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यकर्मादृष्टकारित"मिति वैशेषिकदर्शनस्य पञ्चमाध्यायद्वितीयाह्निकत्रयोदशसूत्रे सृष्टिं प्रत्यदृष्टस्यैव मूलकारणता नेश्वरस्येति तेनैवाङ्गीकारात्। अग्नेरूर्द्ध्वं गमनं, वायोस्तिर्यग्गमनं, परमाणूनां मनसश्चाद्यक्रिया एतत्सर्वमदृष्टमपेक्षमेवेति तत्सूत्रार्थः। अस्यायमभिप्रायो-

ऽदृष्टवशेन परमाणुगतक्रियर्यैव 'सृष्टि'रिति। परमाणूनामदृष्टस्य च सृष्टेर्मूलकारणत्वेन सृष्ट्या महेश्वरस्य किञ्चित्सम्बन्धाभावात्कणादमत निरीश्वरमतमिति तत्प्रेक्षावद्भिरुपेक्षणीयमेव।

पि०—वत्स ! न चैव वक्तु शक्यते। "तद्वचनादाम्नायस्य प्रामाण्य"-मिति तद्दर्शनप्रथमाध्यायप्रथमाह्निकतृतीयसूत्रे तेनैव महर्षिणेश्वरसत्त्वाङ्गीकारात्। तच्छब्दस्याश्वेरवाचकताभ्युपेया। "तदित्यनुपक्रान्तमपि प्रसिद्धतयेश्वरं परामृशती"ति शङ्करमिश्रेणोपस्कारभाष्ये तच्छब्देनेश्वर-परामर्शाङ्गीकारात्। सूत्रे पूर्वप्रतिपादितार्थबोधकयच्छब्दाभावेऽपि तच्छब्दस्य प्रसिद्धवस्तुप्रतिपादकत्वेनेश्वरस्य च प्रतिपाद्यतया "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति भगवद्गीतासप्तदशाध्यायत्रयोविंशश्लोके तथाविधयच्छब्दप्रयोगाभावेऽपि तद्गततच्छब्दस्य ब्रह्मबोधकत्ववदत्रापि तच्छब्देनेश्वरपरामर्श इति तद्व्याख्यार्थ। इतोऽवगम्यते तेन महर्षिणा साक्षाद्विधयेश्वरानङ्गीकारेऽपि गौणविधयेश्वरः स्वीकृत एवेति। अदृष्टस्य धर्माधर्मरूपस्यात्मनिष्ठस्याचेतनतयोपादानगोचरापरोक्षज्ञानादिमच्चेतनाधिष्ठितस्यैव परमाणुषु मनसि वायौ कर्म जनयितुं सामर्थ्यमुपलभ्यते। अतस्त्वदुक्तदिशादृष्टस्वीकृत्यापि तस्येश्वराधीनत्वं स्थितमेव। कणादनयस्य निरीश्वरवादत्वं तु शास्त्रस्य सम्यगपरिशीलनमूलकमिति ज्ञेयम्।

पु०—पितः ! शास्त्रेष्वीश्वरास्तित्वस्वीकृतिसत्त्वेऽपि तद्विषये वक्ष्यमाणदिशा मम सन्देहो जागर्त्येव। तथा हीश्वरस्य चक्षुरिन्द्रियग्राह्यत्वं न सम्भवति। चाक्षुषप्रत्यक्षे प्रत्युद्भूतरूपस्यैव कारणत्वाङ्गीकारात्। उद्भूतत्वं प्रत्यक्षयोग्यत्वमित्यर्थः। ईश्वरस्य रूपरहितत्वेनोद्भूतरूपवत्त्वाभावाच्चाक्षुषप्रत्यक्षयोग्यत्वाभाव। 'ईश्वरो बाह्यप्रत्यक्षाविषयो भवितुमर्हति, अरूपिद्रव्यत्वा'दरूपिवाय्वाकाशादिद्रव्यव'दित्यनुमानेन बाह्य-

प्रत्यक्षाभावो निर्णीत । नास्य मानसप्रत्यक्षयोग्यत्वमपि सम्भवति । नैयायिकमते जीवात्मनोऽनेकत्वव्यापकत्वाङ्गीकृतिवदीश्वरस्याप्येकत्व-व्यापकत्वाङ्गीकारात् । ज्ञानसामान्य प्रत्यात्ममन सयोगस्यैव कारणतया स्वस्वमनसा स्वस्वात्मसयोगवत्तस्य व्यापकत्वभङ्गभिया स्वतरात्मभि सह तदात्मसयोगोऽप्यस्तीति स्वीकर्त्तव्यम् । तेन 'अह सुखी' 'अह दु खी' चेत्याकारेण स्वस्य स्वमानसप्रत्यक्षत्ववत् 'परात्मा सुखी, वा दु खी' चेत्याकारेण परात्मनामपि स्वमानसप्रत्यक्षत्वापत्ति । तस्य व्यापकत्वेन स्वेतरात्मभि सहापि स्वमन सयोगसत्त्वात् । अतस्तद्वारणाय स्वस्वमानसप्रत्यक्षं प्रति परात्मव्यावृत्तविजातीयमन संयोगस्यैव कारणत्व-मङ्गीकर्त्तव्यम् । तेन सयोगस्य सामान्यात्परात्मस यथा कथञ्चित् स्वमन - सयोगसत्त्वेऽपि तादृशवैजात्यघटितमन संयोगाभावेनापरात्मनामप्रत्यक्षत्व-वदीश्वरेऽपि प्रत्यक्षत्वाभावोऽभ्युपगतव्य । तत्रापि तादृशविलक्षणसंयोगा-भावात् ।

पि०—वत्स ! न चैव वक्तु शक्यते । उपरिलिखितेश्वरस्य चक्षु-रादीन्द्रियग्राह्यत्वाभावेऽप्यनुमानप्रमाणादिना तदस्तित्वाङ्गीकारसम्भवात् । तथा हि 'क्षित्यङ्कुरादिक कर्त्तृजन्य' कार्यत्वात्, यद्यत्कार्यं तत्तत्कर्त्तृजन्यं यथा घटपटादि'रित्यनुमानप्रमाणेन, "द्यावाभूमी जनयन् देव एक" "विश्वस्य कर्त्ता भुवनस्य गोप्ता" "ईश्वरमुपासीत" "य सर्वज्ञ सर्ववित्" "तस्य कामयमं तत सोऽकामयत" इत्यादिश्रुतिभिश्च न च त्वया श्रुतीनामप्रामाण्यमापादनीयम् । आस्तिकदार्शनिकै सर्वं श्रुतीनां दृढप्रामाण्याङ्गीकारात् । ईश्वरविषयऽप्यत्पर्वमात्मनिरूपणकाले प्रकट-यिष्यम् ।

पु०—महोदया ! भवतु तर्हि, साम्प्रतं प्रथम कणादानद्रव्यादि-

सप्तपदार्थस्वरूपं निरूप्य तत्तत्पदार्थतत्त्वज्ञानात्तत्तत्पदार्थविषयकनिवृत्ति-प्रकारः कीदृशस्तथाविधनिवृत्त्या च मुक्त्युपलम्भः कथमिति निरूपणीयम् ।

पि०—वत्स ! त्वत्प्रश्नोत्तराण्यग्रे यथास्थानं प्रकटयिष्यन्ते । किन्त्वत्र साम्प्रतं पदार्थतत्त्वबोधसौकर्याय प्रोक्तपदार्थेषु कतिपयपदार्थानां साधर्म्यवैधर्म्यप्रकारः प्रदर्श्यते । तथा हि पदार्थानां धर्मगतैकता साधर्म्यं तत्तद्धर्मगतभेदश्च वैधर्म्यमिति वदन्ति । यथा द्रव्यत्वरूपधर्मस्य वक्ष्यमाणक्षित्यादिनवद्रव्यवृत्तित्वेन द्रव्यत्वमेव क्षित्यादीनां साधारणधर्मस्तथा गुणत्वकर्मत्वादिधर्मा अपि गुणकर्मादीनां साधारणधर्माः । किन्तु गुणत्वस्य वक्ष्यमाणचतुर्विंशतिगुणेषु विद्यमानत्वेन तद्भिन्नद्रव्यादिपदार्थपञ्चकेऽविद्यमानत्वेन च गुणभिन्नसकलपदार्थानां वैधर्म्यम् । द्रव्यत्वस्य च क्षित्यादिनवद्रव्यमात्रवृत्तित्वेन तद्भिन्नगुणादिसकलपदार्थावृत्तित्वेन च गुणादिपदार्थषट्कस्य वैधर्म्यम् । सुतरामेतद्बोद्धव्यं 'यो हि धर्मो यत्र तिष्ठति तद्धर्मस्तत्पदार्थस्य साधर्म्यं, यत्र धर्मो यत्पदार्थे न तिष्ठति तद्धर्मस्तत्पदार्थस्य वैधर्म्य मिति । पूर्वोक्तदिशा सामान्यविशेषाकारेण यावद्वस्तुविषयकज्ञानमेव 'वस्तुविचार' इति विद्वांसो निगदन्ति ।

पु०—महोदयाः ! तर्ह्यत्र निगदन्तु कृपया साधर्म्यवैधर्म्यज्ञानजन्यपदार्थतत्त्वज्ञानात्कया रीत्या तत्तद्विषयकनिवृत्तिः सञ्जनिष्यते लोकस्य ? तन्निवृत्त्या च पुनः तस्य कीदृश उपकारः सेत्स्यतीति ।

पि०—वत्स ! तथाविधसाधर्म्यवैधर्म्यज्ञानजन्यपदार्थतत्त्वज्ञानान्मुमुक्षुपुरुषस्य 'अयमेवात्मा' 'नायमात्मे'त्याद्याकारेणात्मानात्मविषयकप्राथमिकज्ञानं समुत्पद्यते, तेन चानात्मवस्तुन्यनुपादेयत्वादिसन्दर्शनेन

तज्ज्ञानादरताप्रयुक्तनिवृत्ति सञ्जायते, तन्निवृत्तिजन्यपूर्वोक्तज्ञानदार्ढ्येनात्म-साक्षात्कारे जायमाने तद्व्यक्तेर्देहादौ 'अहं शुक्लः' 'अहं कृष्णः' 'अहं धनी' 'अहं मानी' त्याद्याकारेण जायमानात्मत्वभ्रमविनाशात् स्वमते सकल-वस्तुविषयकमिथ्याज्ञानं, कपिलमते च वैराग्यं सञ्जायते, तदनन्तरं तत्तद्वस्तुगतदोषज्ञानं, तदनन्तरं दुष्टवस्तुत्वमाग्रहात्तत्तद्वस्तुनो निवृत्ति-स्तदनन्तरं सदसत्कर्मसु प्रवृत्त्यभावात् तत्तत्कर्मजन्यदेहभोगाद्यारम्भकादृष्टा-नुत्पत्तिस्तदनन्तरं सुखदुःखादिभोगाधारभूतशरीरानुत्पत्तिस्तया तदानीं सकलविधदुःखानुत्पत्तिर्घटते तादृशदुःखानामनुत्पत्तिरभावो वा मोक्षाख्यया-भिहित ।

पु०—महोदया ! भवतु तर्हि, साम्प्रतं पूर्वोक्तवैराग्यादृष्टजन्मदुःख-स्वरूपप्रतिपादनेनानुग्राह्य ।

पि०—वत्स ! अस्मन्मते विषयवासनाराहित्यं, कपिलमहर्षिमते च अनित्येषु स्रक्चन्दनवनितादिप्रत्यक्षदृष्टविषयेषु स्वर्गादिदृष्टविषयेषु [redacted] पुरुषस्यानभिलाषो वैराग्यम्। तत्तु द्विविधम्। परापरभेदात्। तत्र येषु येषु सांसारिकविषयेषु प्रथमं पुरुषस्यासक्तिर्जाता तस्य तत्सकल विषयकाकाङ्क्षाभाव एवापरवैराग्यं, परमकल्याणास्पदात्मसाक्षात्कारेऽन्य-नभिलाष एव परवैराग्यं चेति। एतदुभयविधवैराग्यं जीवस्य भोगादिना प्रवृत्तिविनाशाज्जन्मजन्मान्तरोपार्जितपापविनाशाद्वा सञ्जायत इति। अदृष्ट [redacted] सदसत्कर्मानुष्ठानजन्यफलापादकात्मनिष्ठसंस्कारविशेष । तस्यैव जीवात्मसुखदुःखभोगहेतुत्वात्। आत्मन सुखदुःखादिभोगार्थं तद्भोगाय-तनशरीरधारणमेव जन्म। आत्मानुकूलवेदनीयं सुखम्। आत्मप्रतिकूल-वेदनीयं दुःखमिति। तच्च दुःखं त्रिविधम्। आध्यात्मिकाधिभौतिकाधि-दैविकभेदात्। तत्र शरीरमनसी अधिकृत्य जायमानदुःखमाध्यात्मिकम्।

पु०—पितः ! तथाप्यत्यायाससाध्यदुःखनिवर्त्तकशास्त्रीयोपायानुष्ठानं मया कथमपि नाङ्गीकर्त्तव्यम् । प्रत्यहं क्षुधादिनिवृत्त्यर्थकभोजनादि प्रतिकारवत्तत्तद्रोगादि निवर्त्तकसामयिकौषधपानादिप्रतिकारयथाशास्त्याचरणादिनापि तत्तद्रोगादिनिवृत्तिसम्भवात् ।

पि०—वत्स ! न मिलन्ति वैद्यादयः सर्वदेशे सर्वकाले वा। कदाचिन्मिलत्स्वपि तेषु तथा प्रतिकारैर्न भवति तत्तद्रोगाद्यात्यन्तिकनिवृत्तिः। दरीदृश्यन्तेऽवश्यं रोगादयः शरीरे विद्यमाने। विशालेऽस्मिन् संसारे प्राणिमात्रस्य सर्वाकारेण सुखित्वं न दृश्यते। तत्र केवलं किंचदंशेन सुखिनस्त्वकियदंशेनावश्यं दुःखिनोऽपि दृश्यन्ते। तेषु केचन धनविषये सुखिनोऽपि पुत्रादिविषये दुःखिनः, पुत्रादिविषये सुखिनोऽपि रोगादिविषये दुःखिनश्च सन्दृश्यन्ते। इत्थम् 'आब्रह्मस्तम्बपर्यन्तं दुःखभागि'त्युक्तौ कैमुतिकन्यायेन प्राण्यन्तर्गतमनुष्येष्वपि दरिद्रादारभ्य चक्रवर्त्तिपर्यन्ता दुःखनिवारकसामग्रीसत्त्वेऽपि दुःखिनः परिदृश्यन्ते। अतो बुद्धिमत्तमाः पुरुषाः स्वल्पसुखकदुःखसाध्यकरोपायसत्त्वेऽपि तत्परित्यागेन कष्टसाध्येष्वपि शास्त्रीयोपायेषु चेष्टन्त एवेत्यवधेयम्। प्रोक्तकैमुतिकन्यायस्तु 'यत्र दुर्बोध्यस्य दुःसाध्यस्यापि विषयस्य सुखबोधनादिसिद्धिस्तत्र सुबोध्यस्य सुसाध्यस्य च विषयस्य नितरां सिद्धि'रित्यात्मकः।

पु०—पूज्यपादाः ! अस्तु तर्हि, निगद्यतां तावदिदानीं तादृशदुःखनिवृत्तये किमात्मकशास्त्रीयोपायो भवद्भिमत इति।

पि०—सौम्य ! प्रागुक्तमस्माभिः कणादोक्तद्रव्यादिसप्तपदार्थतत्त्वज्ञानादेव मुक्तिरिति। पदार्थतत्त्वज्ञानमन्तरेण तत्तत्पदार्थविषयकतत्त्वज्ञानासम्भवात् प्रथमं पदार्थस्वरूपं निरूप्यानन्तरं द्रव्यादिसप्तपदार्था यथाक्रमं निरूपयिष्यन्ते। यथा वाच्यत्वाभिधेयत्वज्ञेयत्वान्यतमधर्मवत्त्व

पदार्थत्व'मिति पदार्थलक्षणम्। यो हि पदार्थो वचनेन प्रकाशयितुं शक्य स वाच्यस्तन्निष्ठो धर्मो वाच्यत्वं, यस्तु पदार्थोऽभिधाशक्त्या वाच्यार्थवृत्त्या वा लभ्यते सोऽभिधेयस्तन्निष्ठो धर्मोऽभिधेयत्व, यश्च पदार्थो ज्ञानेन गम्य स ज्ञेयस्तन्निष्ठधर्मो ज्ञेयत्वमित्यर्थ। तथा सति ससारेऽस्मिन् घटपटादि-यावत्पदार्था सन्ति ते सर्वे वाच्या, अभिधेया, ज्ञेयाश्च भवन्तीति तेषु वाच्यत्वादिधर्मवत्तया त एव पदार्थपदवाच्या भवन्ति। ते च पदार्था· कणादमहर्षिनये द्रव्याद्यभावान्ता सप्त, गौतममहर्षिनये प्रमाणादिनिग्रह-स्थानान्ता षोडश, कपिलमहर्षिनये प्रकृत्यादिपुरुषान्ता पञ्चविंशति, पतञ्जलिमहर्षिनये सेश्वरप्रकृत्यादिपुरुषान्ता षड्विंशति, जैमिनिमहर्षि-मतीयनये द्रव्यगुणकर्मसामान्यसमवायशक्तिसख्यासादृश्यान्ता अष्टौ, महर्षि-व्यासदेवनये च चिदचिदात्मको द्वावेवेति बोध्यम्।

पु०—महोदया! पदार्थाना वाच्यत्वादिधर्मवत्त्वलक्षण मया माङ्गीकर्त्तव्यम्। किञ्चिज्ज्ञजीवपक्षे पृथिवीस्थयावत्पदार्था वाच्या, अभिधेया, ज्ञेयाश्च न भवन्तीति तेषु वाच्यत्वादिधर्मवत्त्वासम्भवात्।

पि०—वत्स! न चैव वक्तु शक्यते। साधारणव्यक्तीना तेषु वाच्यत्वादिधर्मविषयकज्ञानासम्भवेऽपीश्वरस्य योगिनां च सर्वज्ञत्वेन तत्-पक्षे यावत्पदार्थविषयकज्ञानसद्भावसम्भवेन तथा वाच्यत्वादिधर्मविषयक-ज्ञानसम्भवात्। अतस्तादृशलक्षण न कुत्राप्यव्याप्तिदोषदुष्टमित्यवधेयम्।

पु०—महोदया! अस्तु तर्ह्यत्र पूर्वोक्तलक्षणाव्याप्तिस्वरूपनिर्णये-नानुग्राह्य।

पि०—वत्स! तत्र 'असाधारणधर्मो लक्षण'मिति लक्षणलक्षणम्। तच्च द्विविधम्। स्वरूपलक्षणतटस्थलक्षणभेदात्। तत्र धर्म· स्वभाव। लक्ष्यते ज्ञायतेऽनेनेति लक्षणमितरभेदानुमापकचिह्नमित्यर्थ·। स्वरूपमेक

पदार्थत्व'मिति पदार्थलक्षणम्। यो हि पदार्थो वचनेन प्रकाशयितुं शक्यः स वाच्यस्तन्निष्ठो धर्मो वाच्यत्वं, यस्तु पदार्थोऽभिधाशक्त्या वाच्यार्थवृत्त्या वा लक्ष्यते सोऽभिधेयस्तन्निष्ठो धर्मोऽभिधेयत्वं, यश्च पदार्थो ज्ञानेन गम्यः स ज्ञेयस्तन्निष्ठधर्मो ज्ञेयत्वमित्यर्थः। तथा सति संसारेऽस्मिन् घटपटादि-यावत्पदार्थाः सन्ति ते सर्वे वाच्याः, अभिधेयाः, ज्ञेयाश्च भवन्तीति तेषु वाच्यत्वादिधर्मवत्तया त एव पदार्थपदवाच्या भवन्ति। ते च पदार्थाः कणादमहर्षिनये द्रव्याद्यभावान्ताः सप्त, गौतममहर्षिनये प्रमाणादिनिग्रह-स्थानान्ताः षोडश, कपिलमहर्षिनये प्रकृत्यादिपुरुषान्ताः पञ्चविंशतिः, पतञ्जलिमहर्षिनये क्षेत्रज्ञप्रकृत्यादिपुरुषान्ताः षड्विंशतिः, जैमिनिमहर्षि-मतीयनये द्रव्यगुणकर्मसामान्यसमवायशक्तिसंख्यासादृश्यान्ता अष्टौ, महर्षि-व्यासदेवनये च चिदचिदात्मकौ द्वावेवेति बोध्यम्।

पु०—महोदयाः! पदार्थानां वाच्यत्वादिधर्मवत्त्वलक्षणं मया नाङ्गीकर्त्तव्यम्। किञ्चिज्ज्ञजीवपक्षे पृथिवीस्थयावत्पदार्थाः 'वाच्याः', अभिधेयाः, ज्ञेयाश्च न भवन्तीति तेषु वाच्यत्वादिधर्मवत्त्वासम्भवात्।

पि०—वत्स! न चैव वक्तुं शक्यते। साधारणव्यक्तीनां तेषु वाच्यत्वादिधर्मविषयकज्ञानासम्भवेऽपीश्वरस्य योगिनां च सर्वज्ञत्वेन तत्-पक्षे यावत्पदार्थविषयकज्ञानसद्भावसम्भवेन तेषां वाच्यत्वादिधर्मविषयक-ज्ञानसम्भवात्। अतस्तादृशलक्षणं न कुत्राप्यव्याप्तिदोषदुष्टमित्यवधेयम्।

पु०—महोदयाः! अस्तु तर्हि तत्र पूर्वोक्तलक्षणाव्याप्तिस्वरूपनिर्णये-नानुग्राह्यः।

पि०—वत्स! तत्र 'असाधारणधर्मो लक्षण'मिति लक्षणलक्षणम्। तच्च द्विविधम्। स्वरूपलक्षणतटस्थलक्षणभेदात्। तत्र धर्मः स्वभावः। लक्ष्यते ज्ञायतेऽनेनेति लक्षणमितरभेदानुमापकचिह्नमित्यर्थः। स्वरूपमेव

लक्षणं स्वरूपज्ञापकमित्यर्थः । यथा 'कम्बुग्रीवादिमत्त्वं घटत्व'मिति घटस्य स्वरूपलक्षणम् । ईदृशलक्षणादेव घटवस्तुस्वरूपमात्रबोधात् । तटस्थं स्वरूपातिरिक्तविशेषणमेव लक्षणमितरभेदानुमापकचिह्नमित्यर्थः । 'यावल्लक्ष्यकालमनवस्थितत्वेऽपि तदितरपदार्थव्यावर्त्तकत्वं तटस्थलक्षणत्व'मिति तटस्थलक्षणलक्षणम् । तथा हि गन्धवत्त्वं पृथिवीत्व'मिति पृथिवीलक्षणकरणेन 'क्षणमगुणो भाव' इतिन्यायेन घटादेरुत्पत्तिक्षणे गन्धादिगुणाभावात्तदानीं यावल्लक्ष्यकालं तत्र गन्धवत्त्वलक्षणस्यानवस्थितत्वेऽपि तल्लक्षणस्य पृथिवीतरजलादिद्रव्य व्यावर्त्तकत्वमस्त्येव । पृथिवीतरद्रव्यमात्रे गन्धवत्त्वाभावात् । लक्षणेष्वतिव्याप्त्यव्याप्त्यसम्भवाख्यदोषत्रयमङ्गीक्रियते शास्त्रज्ञैः । तत्रालक्ष्ये लक्षणगमनमतिव्याप्तिः । यत्र यल्लक्षणेन यत्पदार्थो निरूप्यते तत्र तल्लक्षणस्य तत्पदार्थ एव लक्ष्यः, तदितरयावत्पदार्थोऽलक्ष्यम् । तथा सति 'शृङ्गवत्त्वं गोत्व'मिति गोलक्षणस्य गोर्लक्ष्यः, तद्भिन्नं च सर्वमलक्ष्यम् । अत्रैतल्लक्षणस्यातिव्याप्तिदोषदुष्टत्वमवधेयम् । लक्षणस्यास्य लक्ष्यभूतगोमात्रगामित्वेऽप्यलक्ष्यभूतशृङ्गविशिष्टहरिण महिषादियावत् पशुगामित्वदर्शनात् । लक्ष्यैकदेशे लक्षणागमनमव्याप्तिः । यथा 'कपिलवर्णविशिष्टत्वं गोत्व मित्याकारकगोलक्षणस्याव्याप्तिदोषदुष्टत्वम् । तस्य गवेकदेशकपिलवर्णविशिष्ट गोगामित्वेऽपि शुक्लकृष्णचित्रादिविविशिष्टगोगामित्वाभावेन गोमात्रावृत्तित्वात् । लक्ष्यमात्रे लक्षणागमनमसम्भवः । यथा 'एकशफवत्त्वं गोत्व'मित्याकारकगोलक्षणस्यासम्भवदोषदुष्टत्वम् । गवां प्रतिपदं द्विद्विशफयोर्विद्यमानत्वेन लक्ष्यभूतगोमात्रेषु तल्लक्षणागमनात् । गलकम्बलवत्त्वं गोत्व'मित्याकारकगोलक्षणस्य निर्दुष्टत्वमेव । गलकम्बलवत्त्वरूपलक्षणस्य गोष्वेव विद्यमानत्वात्तदितरपशुष्वविद्यमानत्वाच्च ।

पु०—महोदयाः ! तिष्ठतु सम्प्रतीदानीं प्रासङ्गिकविविधप्रश्नावतरणम् । किन्त्वत्र पूर्वोक्तविविधमतीयपदार्थगततारतम्यादिविचारेणानुग्राह्य ।

[पि०—वत्स । विविधमतीयपदार्थविचारेणास्य ग्रन्थस्य कलेवरवृद्धिभिया ततो विरम्यास्मदभिमतकणादोक्तद्रव्यादिपदार्थेषु सप्तगौतमोक्तप्रमाणादिनिग्रहस्थानान्तषोडशपदार्थानामन्तर्गतत्व संक्षेपत प्रदर्श्य ग्रन्थेऽस्मिन् कणादमतीयपदार्थविचारो विस्तरेण करिष्यते। तथा हि 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयव-तर्कनिर्णयवाद जल्पवितण्डाहेत्वाभास छलजातिनिग्रहस्थानान्येव गौतममहर्ष्युक्तषोडशपदार्था। एषामस्मदभिमतप्रागुक्तकणादोक्तद्रव्यादिसप्तपदार्थेषु कस्य कुत्रान्तर्गतत्वमिति चेदुच्यते। यथा तन्मत प्रत्यक्षानुमानोपमानशब्दात्मक प्रमाणानामस्मन्मते वक्ष्यमाणरूपादिचतुर्विंशतिगुणान्तर्गतज्ञानात्मकगुणपदार्थान्तर्गतत्वम्। तन्मत 'आत्मशरीरेन्द्रियार्थबुद्धि मन प्रवृत्तिदोष प्रेत्यभावफल दु खापवर्गात्मक प्रमेयपदार्थानामस्मन्मते द्रव्यगुणाभावपदार्थान्तर्गतत्वम्। तथा हि तत्रात्मशरीरमनसा द्रव्यान्तर्गतत्वमिन्द्रियार्थबुद्धिप्रवृत्तिदोषफलदु खाना गुणान्तर्गतत्व, अपवर्गस्य चाभावान्तर्गतत्वम्। तत्रात्मा वक्ष्यमाणलक्षण, इन्द्रियाणि घ्राणरसनाचक्षुस्त्वक्श्रोत्राणि, गन्धरसरूपस्पर्शशब्दा इन्द्रियार्था, शरीर वक्ष्यमाणलक्षण, बुद्धिमनसी वक्ष्यमाणलक्षणे, प्रवृत्ति प्रवर्त्तना, सा रागादिभ्य सञ्जायते। रागादीनामेव पापपुण्योभयकर्मप्रवर्त्तकत्वात्। दोषा रागद्वेषमोहशब्दप्रतिपाद्येच्छाद्वेषमिथ्याज्ञानात्मका, प्रेत्य मृत्वा भावो जननमिति व्युत्पत्त्या मरणोत्तरजन्म प्रेत्यभावो बोध्य। चरमशरीरप्राणसयोग ध्वसो मरणम्। तच्चाभावपदार्थ। आद्यशरीरप्राणसयोगो जन्म। तत्तु गुणपदार्थ। मुख्यफल यत्र सुखदु खसवेदनात्मक भवति तत्र गुणपदार्थान्तर्गत भवति, यत्र च गौणमुख्यसाधारणजन्यमात्रात्मक भवति तत्र द्रव्यान्तर्गतमपि भवति। दु खानि तु शरीर, षडिन्द्रियाणि, षड्विषया, षड्बुद्धय, सुख, दु ख चेति मिलित्वैकविंशति। एतत्तु दु ख क्वचिद्द्रव्यान्तर्गतमपि। वक्ष्यमाणलक्षणसंशयस्तु गुणान्तर्गत। तस्य ज्ञानभेदात्मकत्वात्।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकावयवाना शब्दात्मकतया गुणान्तर्गतत्वम्। व्याप्यारोपाधीनव्यापकारोपरूपतर्कस्य, विचारपूर्वक पक्षप्रति-

पक्षाभ्यामर्थावधारणरूपनिर्णयस्य च ज्ञानात्मकतया, तत्त्वबुभुत्सुकथारूपवादस्य, विजिगीषुकथारूपजल्पस्य, स्वपक्षस्थापनाहीनकथारूपवितण्डायाश्च वाक्यात्मकत्वेन शब्दान्तर्गततया गुणान्तर्गतत्वमेव। अनुमिति तत्कारणान्यतरप्रतिबन्धकज्ञानविषयहेत्वाभासानां यथायथ द्रव्याद्यन्तर्गतत्वम्। अन्यतरत्त्व भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वमित्यर्थः। अभिप्रायान्तरेण प्रयुक्तशब्दस्यार्थान्तर परिकल्प्य दूषणाभिधानरूपच्छलस्यासदुत्तररूपजातेश्च वाक्यात्मकतया गुणान्तर्गतत्वम्। पराजयहेतुभूतनिग्रहस्थानानां यथायथं द्रव्याद्यन्तर्गतत्वमेवेत्यवधेयम्। गौतमोक्तप्रमाणादिषोडशपदार्थाः कणादोक्तद्रव्यादिसप्तपदार्थान्तर्गता एव।

पु०—अस्तु तर्हि, साम्प्रतं कणादोक्तपदार्थस्वरूपनिर्णयेनानुग्राह्य।

पि०—वत्स! कणादोक्तसप्तपदार्थेषु प्रथमं द्रव्यलक्षणं निरूप्यते यथा—'गुणवत्त्वं, कर्मवत्त्वं वा कार्यमात्रसमवायिकारणत्वं द्रव्यत्व'मिति द्रव्यलक्षणम्। यस्मिन् पदार्थे वक्ष्यमाणाश्चतुर्विंशतिगुणा वक्ष्यमाणानि पञ्चकर्माणि कार्यमात्रं प्रति वक्ष्यमाणसमवायिकारणत्वं च स्थापयन्ति तत्पदार्थ एव द्रव्यम्। तच्च द्रव्यं नवविधम्। क्षित्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदात्।

पु०—पितः! द्रव्यस्य भवदुक्तगुणवत्त्वकर्मवत्त्वलक्षणद्वयं मया नाङ्गीकर्तव्यम्। तल्लक्षणद्वयस्याव्याप्तिदोषदुष्टत्वात्। तथाहि 'उत्पत्तिमद्द्रव्यस्य गुणोऽप्युत्पत्तिमानि'ति नियममाश्रित्य घटपटादिद्रव्योत्पत्तिदशायां तत्र तद्गतरूपादिगुण कथमपि न तिष्ठेत्। यदा यत्र घटादिकार्यमुत्पत्स्यते तदुत्पत्तेः प्राक् तत्र तस्याविद्यमानत्वेन कार्याधिकरणेऽवश्यं यत्किञ्चित्सम्बन्धेन कार्याऽव्यवहितप्राक्क्षणावच्छेदे कार्यमात्रानवस्थिति स्वीकर्तव्या। तथा सति 'निर्गुणानि द्रव्याणि च निष्क्रियाणी'ति प्रतिज्ञातुमवश्यम्। उत्पत्तिक्षण एव घटादिरूपकार्ये तद्गतरूपादिगुणानामसत्त्वात्। इत्थं यथोत्पत्तिमद्द्रव्ये गुणवत्त्वलक्षणाव्याप्तिस्तथाकाशकालदिगात्मरूपव्यापकद्रव्येष्वपि कर्मवत्त्वलक्षणाव्याप्तिः, तेषु कर्मवत्त्वासम्भवात्।

पि०—वत्स ! त्वत्प्रदर्शितस्थलेषु तल्लक्षणद्वयस्याव्याप्ति र्न सम्भवति । वक्ष्यमाणदिशा तन्निराकरणात् । तथाहि तल्लक्षणे गुणवत्त्वपदस्य 'गुणवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व'मित्यर्थः कर्त्तव्य । यो हि धर्मो वा जाति र्यदपेक्षयाधिकस्थाने तिष्ठति स तदपेक्षया व्यापकधर्मो वा व्यापकजाति, यश्च धर्मो वा जाति र्यदपेक्षयाल्पस्थाने तिष्ठति स तदपेक्षया व्याप्यधर्मो वा व्याप्यजाति । यथा पार्थिवद्रव्यमात्रवृत्तिपृथिवीत्वजाते र्घटपटादिमात्रवृत्तिघटत्वपटत्वादिजात्यपेक्षया व्यापकत्वम् । घटत्वाद्यपेक्षया पृथिवीत्वस्य बहुदेशवृत्तित्वात् । घटत्वादीनां च क्षितित्वापेक्षया व्याप्यत्वम् । क्षितित्वापेक्षया तेषामल्पदेशवृत्तित्वात् । स्थूलत इदमेव बोद्धव्य यद्बहुदेशवृत्तित्वं व्यापकत्वमल्पदेशवृत्तित्वं च व्याप्यत्वमिति । तल्लक्षणे गुणवत्पदेन वस्त्रादिरूपं यत्किमपि द्रव्यं धृत्वा शुक्लरूपादिगुणविशिष्टे वस्त्रादिरूपे तद्द्रव्ये तस्य विद्यमानतयोत्पत्तिक्षणेऽपि पार्थिवघटपटादियावदनित्यद्रव्ये द्रव्यत्वव्याप्यपृथिवीत्वजाते विद्यमानत्वेन घटपटादिजन्यद्रव्यमात्रे 'गुणवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वसत्त्वेन न तत्र गुणवत्त्वलक्षणाऽव्याप्ति । कर्मवत्त्वस्यापि 'कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्व'मित्यर्थ कर्त्तव्य । यो ह्युपाधि वा धर्मो द्रव्यादिसप्तपदार्थान् परस्पर विभजते वा भेदयति स एव पदार्थविभाजकोपाधि । यथा द्रव्यत्वगुणत्वादि । तत्तद्धर्मेणैव द्रव्यगुणादिपदार्थविभागदर्शनात् । अत्र कर्मवत्पदेन चलनादिकर्मविशिष्टघटपटादिरूप यत्किमपि द्रव्य धृत्वा तन्निष्ठद्रव्यत्वरूपपदार्थविभाजकोपाधेराकाशादिव्यापकद्रव्येष्वपि विद्यमानत्वेन तेष्वपि कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वसद्भावात्तत्र कर्मवत्त्वलक्षणस्य नाव्याप्ति ।

पु०—द्रव्यस्यान्तिमलक्षणघटितसमवायिकारणत्व पुन कीदृशम् ? कथं वा तस्य समवायिकारणता ? कार्यकारणभावानङ्गीकारे च पुन का हानि ?

पि०—शास्त्रेऽङ्गीकृतत्रिविधकारणमङ्गीक्रियते जन्यकार्यमात्रे। समवायसमवायिनिमित्तकारणभेदात्। तत्र समवायिकारणं नामोपादानकारणम्। उपादानं [redacted] कार्योत्पत्त्यर्थमुपादीयमानं सर्वदा कार्येष्वनुगतं कार्यान्वितकारणम्। घटादिकार्योत्पत्तये मृदादीनामलङ्काराद्युत्पत्तये च सुवर्णरजतादीनां ग्रहणेन तेषामुपादानकारणत्वाङ्गीकारात्। किं वा "समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्व"मिति तल्लक्षणम्। तथाहि घटादिरूपकार्यं कपालरूपकारणे समवायसम्बन्धेन तिष्ठति, तन्निष्ठकारणतापि तत्सम्बन्धावच्छिन्ना भवति। अवच्छिन्ना सीमाप्राप्ता परिमिता वेत्यर्थः, यत्सम्बन्धपरित्यागेनासौ स्थातुं न पारयेदिति यावत्। घटस्य स्वसमवायिकारणकपालात्स्वासमवायिकारणकपालद्वयसंयोगाच्च समुत्पत्तेरसौ घटस्तत्कपालद्वयसंयोगश्च तत्कपालद्वये समवायसम्बन्धेनैव तिष्ठतः। समवायसम्बन्धो नित्यसम्बन्ध इत्यर्थः। तादृशसम्बन्धोऽवयवावयविनोर्जातिव्यक्तिमतोर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च पदार्थयोर्मध्ये तिष्ठति। किन्तु कपाले कपालस्य तत्सम्बन्धनासत्त्वात्परस्परकार्यकारणयोः घटकपालयोरेकत्रावस्थितिरेकेनैव सम्बन्धेनासम्भाविनीति कार्यकारणयोरेकत्रैकजातीयसम्बन्धेनैवावस्थानमित्यनङ्गीकृत्य केनाप्येकसम्बन्धेन कारणस्य, येन केनाप्यपरसम्बन्धेन कार्यस्य चैकत्रावस्थानमित्यङ्गीकर्तव्यम्। घटात्मककार्यस्य कपाले समवायसम्बन्धेन विद्यमानतया घटनिष्ठकार्यतापि समवायसम्बन्धावच्छिन्ना, कपालात्मककारणस्य [redacted] कपाले तादात्म्यसम्बन्धेन विद्यमानतया कपालनिष्ठकारणतापि तादात्म्यसम्बन्धावच्छिन्ना। स्वस्मिन् स्ववृत्तिनियामकसम्बन्धस्तादात्म्यसम्बन्धः। तदात्मना भावस्तादात्म्यं तदात्मता तत्स्वरूपो वा। स्वयं स्वस्मिन् येन सम्बन्धेन तिष्ठति तत्सम्बन्ध एव स इत्यभिप्रायः।

कारणता कार्यतया निरूपिता भवति कार्यता च कारणताया निरूपिका भवतीति तदुभयोर्निरूप्यनिरूपकभावसम्बन्धो ज्ञेय । निरूपितत्व नाम निरूपकतासम्बन्धेन सम्बन्धित्वम् । कपालद्वयसयोगरूपगुणस्य तदुभयकपाले समवायसम्बन्धेन विद्यमानतया तत्कपालनिष्ठकारणतापि समवाय सम्बन्धावच्छिन्ना । किं वा कारण कार्येण सह यत्सम्बन्धेन तिष्ठति तत्सम्बन्धमेव कारणतावच्छेदकसम्बन्ध कारणताविशेषकसम्बन्धो वति निगदन्ति । यो हि धर्मो यत्सम्बन्धेन तिष्ठति स धर्मस्तत्सम्बन्धस्यावच्छेदक । तदवच्छेदकधर्मोऽपि तत्सम्बन्धेनेवावच्छिन्नो भवति । अवच्छेदकरूपधर्मो व्यावर्तकविशेषणमित्यर्थ । कारण यत्सम्बन्धावच्छिन्न तन्निष्ठकारणतापि तत्सम्बन्धावच्छिन्ना, कार्यं च यत्सम्बन्धावच्छिन्न तन्निष्ठकार्यतापि तत्सम्बन्धावच्छिन्ना । कस्मिँश्चिद्वस्तुनि कस्यचिद्वस्तुन सति सयोगे तत्र या सयोगोत्पत्तिस्तस्या कार्यकारणयोस्तादात्म्यसम्बन्धो न । तथा हि कस्यचिल्लोकस्य केनाप्यपरवस्तुना सहावयवसयोगे जायमान तद्वस्तुना सह तस्यावयविसंयोगोऽपि घटते । हस्तपदादयोऽवयवा शरीर चावयवि । हस्तेन सह कस्यापि वस्तुन सयोगे सति देहेन सह यस्तद्वस्तुसयोगो घटते तादृशसयोगो देहसयोग प्रति तादात्म्यसम्बन्धेन कारण न भवति । हस्ततत्स्पृष्टवस्तुनोर्हस्तसयोगस्य समवायसम्बन्धेनैव सत्त्वात् । स्पृष्टवस्तुनि हस्तदेहयो सयोग समवायसम्बन्धेनैव तिष्ठतीति बोध्यम् । किञ्च देहे हस्तसयोग एकार्थसमवायसम्बन्धेन, देहसयोगश्च समवायसम्बन्धेन तिष्ठति । एकार्थसमवायो नाम समवायघटितसामानाधिकरण्यम् । हस्ते सयोगदेहयो समवायसम्बन्धेन विद्यमानतयैकाश्रये चैकस्मिन् स्थाने तदुभयसामानाधिकरण्य परिलक्ष्यते । तथाविधावस्थिति समवायसम्बन्धेनैव भवतीति तामेव समवायघटितसामानाधिकरण्यमिति

धूमः। ईदृशहस्तसंयोगे या कारणता तिष्ठति सा समवायसम्बन्धावच्छिन्नै-कार्यसमवायसम्बन्धावच्छिन्ना वा, किन्तु तदितरसम्बन्धावच्छिन्ना न भवति। एवमन्यत्रापि ज्ञेयम्। स्थूलत इदमेव कारणलक्षणमित्यवधेयं यत् 'अन्यथासिद्धिशून्यत्वे सति कार्याधिकरणे कार्याव्यवहितप्राक्क्षणे साक्षात्सम्बन्धेन परम्परासम्बन्धेन वा नियतपूर्ववृत्तित्व'मिति। कार्योत्पत्तिदशायामस्यावश्यकत्वेन नियतत्वलक्षपदार्था एवान्यथासिद्धि-शून्यास्तदानीं तत्रानपेक्षितपदार्थाश्चान्यथासिद्धाः। एतदन्यथासिद्ध-भेदोदाहरणान्यग्रे प्रकटयिष्याम। 'आत्मविशेषगुणभिन्नत्वे सति क्वचित् समवायसम्बन्धेन क्वचित्च स्वसमवायिसमवेतत्वसम्बन्धेन कारणत्वमसम-वायिकारणत्व'मित्यसमवायिकारणलक्षणम्। वक्ष्यमाणा बुद्धिसुखदुःखेच्छा-द्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्कारा एवात्मविशेषगुणाः। तथाहि घटरूप-कार्यकारणीभूतकपालयोः तत्कपालद्वयसंयोगः समवायसम्बन्धेन तिष्ठन् घट-कार्यमुत्पादयतीति स तत्संयोगस्तद्घटस्यासमवायिकारणम्, तत्कपालगतरूपं च तद्घटरूपं स्वसमवायिसमवेतत्वसम्बन्धेनोत्पादयतीति तत्कपालरूपमपि तद्घटगतरूपस्यासमवायिकारणम्। स्वपदेनात्र कपालरूपं तस्य कपाले समवायसम्बन्धेन विद्यमानतया स्वसमवायी कपालस्तत्र च घटस्य समवाय-सम्बन्धेन विद्यमानतया स्वसमवायिसमवेतो घटः। समवेतपदार्थे सम-वेतत्वस्वरूपधर्मस्य स्वरूपसम्बन्धेन विद्यमानतया घटरूपं प्रति कपालरूपं स्वसमवायिसमवेतत्वसम्बन्धेनैवासमवायिकारणम्। एवं पटादिसकल-कार्येष्वप्यवधेयम्। 'समवाय्यसमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणत्व'मिति निमित्तकारणलक्षणम्। यथा घटं प्रति कुम्भकार-चक्रादीनां, पटं प्रति तन्तुवेमादीनां च निमित्तकारणत्वम्।

पु०—पितः! पूर्वोक्तकारणत्रयं मया नाङ्गीकर्तव्यम्। घट-

कारणमृत्पिण्डचक्रयोः, पटकारणसूत्रतन्त्वोश्च सत्त्वेऽपि घटपटानुत्पत्तेः। कारणानङ्गीकारे कार्यानुत्पत्तिवत्कारणाङ्गीकारेऽपि कार्यानुत्पत्त्योभयत्र तुल्यदोषसम्भवात्।

पि०—वत्स! कतिपयकारणसद्भावे कार्यानुत्पत्त्या कारणानङ्गीकरणमनुचितम्। 'कारणकूटसद्भावे कार्योत्पत्तिर्नान्यथे'ति कार्योत्पत्तिमात्रे नियमात्। यत्र कतिपयकारणसत्त्वेऽपि कार्यानुत्पत्तिस्तत्र कस्यापि कारणान्तरस्याभावोऽनुमातव्यः। कारणानङ्गीकारे वक्ष्यमाणदोषापत्तेः। तथाहि यस्य कस्यापि कार्यस्योत्पत्तौ नानोपकरणसत्त्वेऽप्येकैकपदार्थविशेषाभावेन तत्तत्कार्यानुत्पत्तिरिति दृष्टचरम्। कुलालमृत्पिण्डादिकतिपयकारणसत्त्वेऽपि चक्राभावेन घटस्य, तन्तुवायसूत्रादिकतिपयकारणसत्त्वेऽपि वेमादियन्त्राभावेन च पटस्यानुत्पत्तेः। अत कतिपयकारणसत्त्वेऽपि यत्र यत्पदार्थाभावेन यत्पदार्थानुत्पत्तिस्तत्र तत्पदार्थं प्रति तत्पदार्थस्यैव कारणत्वमिति मन्तव्यम्। अन्यथा घटेतरपटादिकारणतन्त्वादिभ्योऽपि घटकार्योत्पत्तिप्रसङ्गात्। किञ्च सूत्रात्तैलस्य, मृत्पिण्डाद्वस्त्रस्य, कदलीबीजादाम्रवृक्षस्याम्रबीजान्नारिकेलगच्छस्य, नारिकेलबीजाद्गुवाकगच्छस्य, पुन्नागबीजात्पनसवृक्षस्य, वेत्याद्याकारेणोत्पत्तिरप्यङ्गीकर्तव्या। तथा सति तैली तैलार्थं सूत्रवालुकादिपदार्थानुपादास्यत उत तिलसर्षपादीन्? आम्रार्थी कदलीवृक्षं प्रोथयेदुताम्रवृक्षम्? इत्थं नानाविधविशृङ्खलताभियान्वयव्यतिरेकाभ्यां कार्यकारणभावोऽवश्यमङ्गीकर्तव्यः। 'यत्पदार्थसत्त्वे यत्पदार्थसत्त्व'मित्यन्वयो, 'यत्पदार्थाभावे यत्पदार्थाभावो व्यतिरेक'श्चेति। तथा सत्यत्र प्रकृते 'घटकारणकपालादिसत्त्वे घटरूपकार्यसत्त्व'मित्यन्वयो, 'घटकारणकपालाद्यभावे घटाभाव' इति व्यतिरेकश्चेति बोध्यम्। एवं कार्यमात्रेष्ववगन्तव्यम्।

पु०—महोदया ! कार्यकारणभावस्वीकृतेरेवमवगम्यते 'यत्र यत्र कारणं तिष्ठेत्तत्र तत्र कार्योत्पत्ति'रिति । यथा जलसेचनेनाग्निनिर्वाप । एकत्र जलसेचनेनापरत्राग्निनिर्वपनाभावात् । अत कार्यकारणयोरेकत्रावस्थानस्यौचित्यादत्र मया जिज्ञास्यते कपालादिरूपकारणेन सह घटादिरूपकार्यस्यैकत्रावस्थान कथ घटत इति ।

पि०—सौम्य ! कार्योत्पत्तिक्षणे कार्यकारणयोरेकत्रावस्थान नकेनैव सम्बन्धेन वयमङ्गीकुर्मः । तदानीं कस्य साक्षात्सम्बन्धेन कस्य वा परम्परया तत्रावस्थानाङ्गीकारात् ।

पु०—महोदया ! भवतु तर्हि, साम्प्रत प्रोक्तनवद्रव्येषु क्षितित्वरूपनिर्णयनानुमाद्य ।

पि०—वत्स ! 'अनेकरूपवत्त्वमनेकरूपवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व वा क्षितित्व'मिति क्षितिलक्षणम् । शुक्लनीलरक्तपीतादिविविधरूपविशिष्टद्रव्यमेव क्षितिस्तन्निष्ठधर्म क्षितित्वमिति प्रथमलक्षणसमन्वय । लक्षणस्यास्योत्पत्तिक्षणे घटादिजन्यद्रव्यमात्रेऽव्याप्ति । 'उत्पन्न द्रव्यं क्षणमगुण निष्क्रिय च तिष्ठती'ति न्यायेन तदानीं तस्य गुणक्रियारहितत्वात् । तदव्याप्तिवारणाय जातिघटितद्वितीयलक्षणानुसरणम् । तल्लक्षणघटितरूपवत्त्वेन चित्रपटादिकमादाय तन्निष्ठद्रव्यत्वव्याप्यक्षितित्वरूपजातेरुत्पत्तिकालीनघटपटादिपार्थिवजन्यद्रव्यमात्रेऽपि सत्त्वान्न तत्राव्याप्तिरिति द्वितीय लक्षणसमन्वय ।

पु०—महोदया ! क्षितिमात्रस्यैवानेकरूपवत्त्वलक्षण मया नाङ्गीकर्तव्यम् । साधारणजले शुक्लरूपस्य, समुद्रजले क्वचिन्नीलरूपस्य, क्वचिच्च शुक्लरूपस्य, यमुनाजले च नीलवर्णस्य प्रतीत्याङ्गारादितैजसद्रव्येषु च

( पाण्डरप्रभृतिषु ) रक्तवर्णाद्यालोकप्रतीत्या जलतेजसोरपि तल्लक्षणातिव्याप्तेः ।

वि०—वत्स ! न चैवं वक्तुं शक्यते । प्राचीनमनीषिभिः समुद्रयमुनाजलगतनीलवर्णप्रतीतेरङ्गारागादितैजसद्रव्यगतरक्तवर्णाद्यालोकप्रतीतेश्चौपाधिकत्वाङ्गीकारात् । तत्तत्स्थलेषु तत्तद्वर्णप्रतीतिर्न स्वाभाविकी, किन्त्वौपचारिक्यौपाधिकी वेति बोध्यम् । वस्तुतस्तु तत्तत्स्थलेषु तत्तद्रूपवत्त्वाभावेऽपि तत्र पार्थिवांशमिलनेनैव नीलवर्णादिप्रतीतिरिति तदभिप्रायः । वयमत्र ब्रूमः—समुद्रजलस्यातिस्वच्छत्वेनैव तत्र नीलवर्णप्रतीतिरिति । चक्षुर्यत्र स्वकार्यसाधनासमर्थं भवति तत्रैव तस्यान्धकारभानम् । अन्धकारस्यातार्किकमयेऽद्रव्यपदार्थत्वेन तत्र वस्तुतो रूपाभावेऽपि चक्षुर्मुद्रणदशायां लोकस्य 'अन्धकार एव कृष्णवर्णविशिष्ट' इत्याकारकबोधो भवत्येव । तत्र चाक्षुषतेजस्तादृशस्वच्छजलराशिगतशुक्लरूपबाधितं सत्स्वच्छजलाभ्यन्तरे यथासम्भवस्थानं गत्वा तत्र तदभ्यन्तरस्थालोकहीनजलगतरूपग्रहणासमर्थं सदन्धकारं पश्यति । असावन्धकारो जलबहिर्भागस्थशुक्लरूपं चैकत्र मिलित्वा नीलवर्णाकारेणावभासते । आकाशे नीलरूपबोधवदत्राप्ययं बोध आलोकाभावप्रयुक्तभ्रम एव । यथा कस्याश्चिद् व्यक्तेश्चाक्षुषतेजो यावद्दूरं गच्छति तावद्दूर एव चन्द्रसूर्यनक्षत्रादिकिरणगतशुक्लप्रभां पश्यति, तदूर्ध्वं प्रदेशे तदगत्यभावात्तत्रान्धकारं पश्यतीति तदन्धकारो निम्नस्थकिरणशुक्लता चोभे एकत्र मिलित्वा नीलाकारेण प्रतिभातस्तथात्रायं बोधोऽपि दूरत्वप्रयुक्तभ्रम एवेति बोध्यम् । अङ्गारागादितैजसद्रव्यस्थले रक्तवर्णाङ्गारादाहेन तत्र यो रक्तवर्णालोकोऽसौ तत्तैजसद्रव्यनिष्ठपार्थिवद्रव्यगतरूपमेव, किन्तु नालोकगतरूपम् । न वयं जले रूपमेकान्ततो नास्तीति ब्रूमः । वायुवत्तस्याप्यप्रत्यक्षत्वापत्तेः । जले केवलाभास्वरशुक्लरूपं तेजसि च केवलभास्वरशुक्लरूपं स्वाभाविकगुणा-

विति तत्तद्द्रव्यनिरूपणावसरे प्रतिपादयिष्याम । अस्या पुनर्लक्षणान्तरं यथा 'अनेकरसवत्त्व' क्षितित्वमिति । यद्द्रव्ये मधुराम्ललवणकटुतिक्त-कषायात्मकषड्विधरसा सन्ति तद्द्रव्यमेव क्षितिरित्यर्थ ।

पु०—महोदया ! क्षितेरेवानेकरसवत्त्वलक्षण मया नाङ्गीकर्त्तव्यम् । जलेऽपि नानारसवत्त्वोपलब्ध्या तत्र तल्लक्षणातिव्याप्ते ।

पि०—वत्स ! न चैव वक्तु युज्यते । जले मधुररसेतरलवणादि-यावद्रसवत्ताप्रतीति र्जलमिश्रितपार्थिवांशस्यैवेत्यङ्गीकारात् । जले मधुर-रसवत्ताप्रतीति तन्निरूपणावसरे प्रकटयिष्याम । पुनरस्य लक्षणान्तर यथा 'पाकजस्पर्शवत्त्व पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं वा क्षितित्व'-मिति । यज्जातीयद्रव्य पाकवशात् क्वचित्काठिन्यं क्वचिच्च मार्दवमित्या-द्याकारेण विलक्षणस्पर्शोऽभिजायते तज्जातीयद्रव्यमेव क्षितिरित्यर्थ । अपक्वकोमलमृन्निर्मितघटशरावादीना आपाकानन्तर कठिनस्पर्शस्य, तण्डुलफलादीनां च स्थालीपाकानन्तर कोमलस्पर्शस्य चोत्पत्ते ।

पु०—महोदया ! पृथिव्या एव पाकजस्पर्शवत्त्वलक्षण मया नाङ्गी-कर्त्तव्यम् । शीतलजलवाय्वोरप्यग्न्यादितापतप्तयोर्विलक्षणोष्णस्पर्शवत्त्व-प्रतीत्या तत्र तल्लक्षणातिव्याप्ते ।

पि०—वत्स ! न चैवं वक्तु युज्यते । घटमत्तादाविव जल-वाय्वोरपि चिरकाल यावत्तादृशोष्णस्पर्शानुभवापत्ते । तत्र तादृशस्पर्शो-ऽग्न्यादिकणानामेवेत्यनुसन्धेयम् । अग्न्यादितैजसद्रव्यतीव्रस्पर्शप्राबल्ये-नैव तत्र तथाविधस्पर्शोत्पत्ते । न चात्रास्मद्वचोऽपलपितव्यम् । कियत्-कालानन्तरं तदुभयपदार्थयो पूर्ववच्छीतलस्पर्शानुभवात् । अस्या पुन-र्लक्षणान्तर यथा 'गन्धवत्त्व क्षितित्व'मिति । यज्जातीयद्रव्य क्वचित्सुगन्ध क्वचिच्च दुर्गन्धमस्तिवृति तज्जातीयद्रव्यमेव क्षितिरित्यर्थ ।

पुष्पादिसुगन्धद्रव्यस्य ? इति । न प्रथमः । वस्त्रनिर्माणोत्तरक्षणे तत्र तत्तद्गन्धानुपलब्धेः । अतोऽवश्यमङ्गीकर्त्तव्यं वस्त्राद्यनुभूयमानतत्तद्गन्धा न वस्त्रादीनामपि केषाञ्चित्तदितरपार्थिवपुष्पादिद्रव्याणामेवेति । सुरभितया प्रतीयमानवस्त्रेषु वस्तुतस्तत्तद्गन्धासत्त्वेऽपि तत्तत्पार्थिवपुष्पादि-सुगन्धद्रव्यसंयोगादेव वस्त्रे तत्तद्गन्धोपलब्धेर्यथा तत्तद्गन्धस्यास्वाभाविक-त्वौपचारिकत्वमागन्तुकत्वं चेति निर्णीयते, तथा वाय्ववयवेषु वस्तुतो गन्धा-सत्त्वेऽपि पार्थिवसुगन्धपुष्पादिद्रव्यसंयोगादेव तत्रास्वाभाविक्यौपचारिकी वा कादाचित्की गन्धोपलब्धिरिति निर्णेतव्यम् । अतो गन्धवत्त्वलक्षणस्य न कथमपि तत्रातिव्याप्तिरित्यवधेयम् । सा च क्षितिर्द्विविधा । नित्यानित्य-भेदात् । तत्र परमाणुरूपा नित्या कार्यरूपा चानित्या । तेन द्व्यणुकादारभ्य पृथिवीपिण्ड-तदावरपार्थिववस्तूनामनित्यत्वं परमाणोश्च नित्यत्वमवधेयम् । परमाणुर्हि निरवयवः सूक्ष्मतमोऽन्त्यावयवश्च । अन्त्यावयवः शेषावयवो, यतः पुनः सूक्ष्मतरावयवान्तरं न सम्भवतीति यावत् । "जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणं तु त्र्यसरेणुः उच्यते । तस्य षष्ठतमो भागः परमाणुः स उच्यते" इति साम्प्रदायिकं परमाणु-लक्षणमङ्गीकृतम् । गवाक्षादिछिद्रमार्गनिपतितसूर्यकिरणपरिदृश्यमानसूक्ष्म-धूलिकणा अत्र त्र्यसरेणवः । तेष्वेकैकत्र्यसरेणौ षड्भागकरणेन षड्भागी-कृतेषु तेष्वेकैकभागः परमाणुरिति वदन्ति । सोऽप्यसत्यः । क्षित्यप्तेजो-मरुत्स्वेव परमाणुः स्वीक्रियते नान्यपदार्थेषु । परमाणुद्वयमेलनेनैको द्व्यणुकः, द्व्यणुकत्रयमेलनेनैकस्त्र्यसरेणुरित्थं क्रमेण पृथिव्यप्तेजोवायुषु तत्तज्जातीयकार्यद्रव्योत्पत्तिः । प्रोक्तानित्यपृथिवी त्रिविधा । शरीरेन्द्रियविषयभेदात् । तेषु 'अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीर-त्वमिति शरीरलक्षणम् । अन्त्यावयवित्वमादाय घटादावतिव्याप्ते-

स्तद्वारणाय चेष्टावत्त्वपदोपादानम्। सत्रान्त्यावयविसत्त्वसत्त्वेऽपि चेष्टावत्त्वाभावान्नातिव्याप्तिः। चेष्टावत्त्वमादाय हस्तपदादावतिव्याप्तेस्तद्वारणायान्त्यावयवित्वपदोपादानम्। तत्र तथात्वसत्त्वेऽप्यन्त्यावयवित्वाभावान्नातिव्याप्तिः। यत्तु वक्तव्यं मृतशरीरेऽन्त्यावयवित्वसत्त्वेऽपि चेष्टावत्त्वाभावात्तत्र तल्लक्षणस्याव्याप्तिरिति। तत्र। 'अन्त्यावयवित्वे सति चेष्टावत्त्व'मित्यस्य 'अन्त्यावयविवृत्तिचेष्टावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व'मित्यर्थकरणेन तद्दोषनिवृत्तेः। अत्रान्त्यावयवि, चेष्टावच्च जीवितशरीरं तद्वृत्तिद्रव्यत्वव्याप्यपृथिवीत्वजातेर्मृतशरीरेऽपि सत्त्वान्न तत्राव्याप्तिः। तच्च पार्थिवशरीरं पुनर्द्विविधम्। योनिजायोनिजभेदात्। तत्र योनिजशरीरमपि द्विविधम्। जरायुजाण्डजभेदात्। तत्र जरायुर्गर्भाशयस्तस्माज्जाता जरायुजाः। यथा मनुष्यगोमहिषादिप्राणिनः। अण्डो डिम्बस्तस्माज्जाता अण्डजाः। यथा कुम्भीरमत्स्यसर्पपक्षिप्रभृतयः। प्रोक्तायोनिजशरीरमपि द्विविधम्। स्वेदजोद्भिज्जभेदात्। स्वेदपदेनात्र घर्मविन्दुक्लेदोष्माणो बोध्याः। तेभ्यो जाताः स्वेदजाः। यथा कीटपतङ्गमशकमक्षिकादय'। स्थूलतोऽत्र बोद्धव्यं यत्पितृरमणजन्यशरीरं योनिजं, तदितरसर्वविधशरीरमयोनिजमिति। पार्थिवशरीरेषु जरायुजाण्डजशरीरं योनिजे, स्वेदजोद्भिजशरीरं चायोनिजे। जलीयादिदेहोऽयोनिज एव। वरुणादिदेवलोकशरीरमयोनिजं पुण्यजन्यं च पिशाचादिशरीरं त्वयोनिजं पापमात्रजन्यं च, मनुष्यशरीरं पापपुण्योभयजन्यं भवति। सुतरां योनिजायोनिजदेहाः क्वचित्पुण्यजन्याः क्वचित् पापजन्याः, क्वचिदुभयजन्या भवन्ति। पूर्वोक्तपार्थिवचतुर्विधशरीरसद्भावं वक्ष्यमाणश्रुतिद्वयमप्यनुमोदयति। यथा—"इतराणि चाण्डजानि च जारजानि च स्वेदजानि चोद्भिज्जानी"ति छान्दोग्योपनिषत्षष्ठाध्याय-

ज्ञानकारणीभूतमनःसंयोगाश्रयत्वाभावान्नातिव्याप्तिः । आकाशात्मकश्रोत्रे शब्दात्मकविशेषगुणसत्त्वेन तत्राव्याप्तेस्तद्वारणाय शब्देतरपदोपादानम् । चक्षुरादीन्द्रियेष्वनुद्भूतरूपादिविशेषगुणसत्त्वात्तत्राव्याप्तेस्तद्वारणायोद्भूतपदोपादानम् । चक्षुरादीन्द्रियगतरूपादिविशेषगुणानामतिसूक्ष्मत्वेनाप्रत्यक्षतयोद्भूतत्वाभावेन तेषूद्भूतरूपादिविशेषगुणवत्त्वाभावान्न लक्षणाव्याप्तिः । इन्द्रियार्थसंयोगस्येन्द्रियार्थोभयनिष्ठतया तदाश्रयत्वस्य चक्षुरादीन्द्रियेष्वपि सत्त्वात्तत्राव्याप्तेस्तद्वारणाय विशेषपदोपादानम् । तादृशसंयोगरूपगुणस्य विशेषगुणानन्तर्गतत्वान्न तत्राव्याप्तिः । तथेन्द्रियं गन्धग्राहकं घ्राणमतिसूक्ष्मं नासाग्रवर्त्ति । यो हि चक्षुरादीन्द्रियाणि स्वेन सह सम्बध्नाति शरीरेन्द्रियभिन्नोऽनित्योऽपि जीवोपभोगसाधनं वा भवति स एव खलु तत्साक्षात्कारप्रयोजको वा विषयः । इन्द्रियाणि तु विषयीणि । स च विषयो द्व्यणुकादारभ्य मृत्पाषाणादिरूपः । शरीरादीनामपि जीवोपभोगसाधनत्वेन तत्रातिव्याप्तेस्तद्वारणाय प्रथमविशेषणोपादानम् । कालादिष्वतिव्याप्तिवारणाय द्वितीयविशेषणस्योपादानम् । तेषां नित्यत्वान्न तत्रातिव्याप्तिः । परमाण्वादिष्वतिव्याप्तिवारणाय विशेष्यपदोपादानम् । तेषामतिसूक्ष्मत्वेनोपभोगसाधनत्वाभावान्न तत्रातिव्याप्तिः ।

पु०—महोदया ! भवदुक्तदिशा क्षित्यादिद्रव्यचतुष्टयस्य परमाणुर्मया नाङ्गीकर्त्तव्यः । अतिसूक्ष्मत्वेन तस्य प्रत्यक्षत्वासम्भवात् ।

पि०—वत्स ! [illegible] चैव वक्तुं शक्यते । 'यो यो जन्यपदार्थः स स कारणवान्, कार्यत्वात्, घटादिव'दित्यनुमानेन द्व्यणुकादियावज्जन्यपदार्थान् प्रति परमाणोरेव कारणत्वमित्यभिज्ञैरङ्गीकारात् । घटदर्शनेन कपालादीनां, पटदर्शनेन तन्त्वादीनां, वृक्षदर्शनेन बीजादीनां, पुत्रदर्शनेन च पित्रोरनुमानवत् स्थूलपृथिवीजलतेजोवायुसंदर्शनेन पृथिव्यादिमूलकारण-

तत्तत्परमाणूनामनुमानं भवत्येव। यद्वस्तु स्थूलं तन्न मूलं, यच्च मूलं तन्न स्थूलम्। स्थूलघटशरावप्रस्तरादिद्रव्यपदार्थाः सूक्ष्मसूक्ष्मचूर्णानन्तरं विक्षिप्ताश्चेत्तर्हि ते क्रमशः स्वस्वपरिमाणापेक्षया न्यूनन्यूनतराकारधारणेन त्र्यसरेणुद्व्यणुकपरमाण्वाकारान् धारयन्तो वायुसाहाय्येनाकाशे उड्डीयमानास्तिष्ठन्त्येव। स्थूलपृथिव्यादिद्रव्यचतुष्टयं प्रति पृथिव्यादिद्रव्यचतुष्टयगतपरमाणुचतुष्टयस्यैव कारणत्वं मान्यम्। परमाणवस्त्वीश्वरयोगिभिन्नव्यक्तेः प्रत्यक्षयोग्या नैव भवन्ति। तेषामुद्भूतरूपवत्त्वाभावात्। न च तेषामपलपनं युक्तम्। तत्तत्स्थूलकार्यानुत्पत्तिप्रसङ्गात्। नैयायिकमते त्र्यसरेण्वादितत्तत्स्थूलद्रव्याणामेव प्रत्यक्षं, न परमाणुद्व्यणुकानामित्यवधेयम्। परमाणवोऽसंख्याताः सन्ति।

पु०—महोदया! भवतु तर्हि, साम्प्रतं जलस्वरूपनिर्णयेनानुग्राह्य।

पि०—वत्स! श्रोतृबुद्धिवैशद्यायास्य क्रमशो लक्षणपञ्चकं निगद्यते, यथा—'अभास्वरशुक्लरूपवत्त्वं जलत्व'मिति जललक्षणम्। अभास्वरपरप्रकाशनासमर्थः। यद्यत्र त्वया वक्तव्यं क्षितितेजसोरप्यभास्वरशुक्लरूपवत्त्वदर्शनात्तत्र तल्लक्षणातिव्याप्तिरिति। तन्न। तल्लक्षणस्य 'अभास्वरशुक्लेतररूपवद्वृत्तिरूपवद्वृत्तिजातिमत्त्वं जलत्व'मित्यर्थकरणेन तद्दोषनिवृत्तेः। तत्राभास्वरशुक्लेतरे ये भास्वरशुक्लनीलपीतादयस्तद्विशिष्टयोः पृथिवीतेजसोरविद्यमाना अथ च रूपवति जले विद्यमाना या जलत्वरूपा जातिस्तद्वज्जलं तत्त्वं जले तिष्ठतीति लक्षणसमन्वयः। पृथिव्यां, सुवर्णरजतादिकतिपयतैजसद्रव्ये चाभास्वरशुक्लादिरूपं, केवलतेजसि च भास्वरशुक्लरूपं तिष्ठति। जलेऽभास्वरशुक्लरूपं तिष्ठति। रूपं पृथिवीजलतेजःस्वेव तिष्ठति। अस्य द्वितीयलक्षणं यथा—'मधुररसवद्वृत्तिरसवद्वृत्तिजातिमत्त्व'मिति। पृथिव्यां

तृतीयखण्डप्रथमानुवाकात्मिका "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्ज"मिति च तैत्तिरीयोपनिषत्तृतीयाध्यायतृतीयानुवाकात्मिका, छान्दोग्यश्रुतावुद्भिज्जपदमुपलक्षणविधया स्वेदजशरीरमपि बोधयत्। जरायुजं, बीजं मातापितृजन्यं चेत्यर्थः। अयोनिजशरीरोऽस्ति कथमिति चेदुच्यते—देवशरीरोपयोगिपुण्यातिशयेन पिशाचादिशरीरोपयोगिपापातिशयेन च शुक्रशोणितयोः सन्निपातमनपेक्ष्यैव नभसि स्थिताः परमाणवस्तत्पुरुषस्य मनोरूपान्तःकरणमभितो द्व्यणुकादिक्रमेण परस्परं संहत्य तत्तद्भोगसम्पादनाय तथाविधकरणपाटवादिसम्पन्नमयोनिजशरीरमुत्पादयन्ति। तथाविधशरीरं पुण्यात्मनामिन्द्रादिदेवानां पापात्मनां पिशाचनारकिप्रभृतीनां चाङ्गीकृतम्। वेदान्तिमते तु समाख्याबलेन यौगिकशब्दबलेन वा देवर्षीणामप्ययोनिजशरीरमङ्गीकृतमस्ति। "ब्रह्मणो मानसाः पुत्रा" इत्युक्तेः। अङ्गारादुत्पन्नत्वादङ्गिरानामापि प्रसिद्धोऽभूत्। न चात्र लोके पितृदत्तपुत्रकन्यानामवत्पुरा ब्रह्मापि मातापित्रनुसारेणाङ्गिरादिसंज्ञा दत्तवानिति वक्तव्यम्। आङ्गिरसादि पित्रोरभावदशायां ब्रह्मणो भवति नामदातुरभावेन तन्नापि तत्तत्संज्ञासम्भवात्। यत्र यन्नर्थं तद्दर्शी ब्रह्मेति नामोच्चारणेन दत्तमिति। तदेवमयं भाष्यतयाङ्गीकर्तव्यं तन्मतात्प्रतिपादयन्नुपदेशोऽप्ययोनिज इति। न चात्र प्रमाणाभावशङ्कनीयम्। "प्रजापतिः प्रजा अनेका असृजत् स तपोऽतप्यत, प्रजा सृजेय"मिति। "स मुखतो ब्राह्मणमसृजद्बाहुभ्यां राजन्यमूरुभ्यां वैश्यं पद्भ्यां शूद्र"मिति ब्राह्मणभागश्रुत्या, "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायते"ति पुरुषसूक्तवैदिकमन्त्रात्मकमन्त्रभागश्रुत्या, "लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तय"दिति मनुप्रथमाध्यायैकत्रिंश-

तज्जातीयद्रव्यमेव जलमिति बोध्यम्। यदत्र त्वया वक्तव्यं प्रथमलक्षणे रूपवत्त्वपदं, चतुर्थलक्षणे च सांसिद्धिकपदं निरर्थकमिति। तन्न। तत्र रूपवत्त्वपदानुपादाने उद्भूतरूपविशिष्टपदार्थस्यैव चाक्षुषप्रत्यक्षविषयत्वाङ्गीकारेण वायुवज्जलस्यापि चाक्षुषप्रत्यक्षविषयत्वासम्भवात्। सांसिद्धिकपदानुपादानेन च घृतजत्वादिपार्थिवद्रव्येषु सुवर्णरजतरङ्गसीसकलौहादितैजसद्रव्येषु चाग्न्यादिसंयोगजन्यद्रवत्वसम्बन्धेन पृथिवीतेजसोरपि तल्लक्षणातिव्याप्तेः। तदुभयद्रव्ये केवलनैमित्तिकद्रवत्वस्यैव विद्यमानतया सांसिद्धिकद्रवत्वस्याभावान्नातिव्याप्तिः।

पु०—महोदया! जलस्य शीतलस्पर्शवत्त्वमात्रमङ्गीकुर्वन्ति चेत्तर्हि निगद्यतां तावदिदानीं भक्ताविरिन्धनपात्रस्य पुष्करिण्यादिभ्यश्चोर्ध्वगमनशीलधूमः कुत उद्गच्छतीति।

पि०—वत्स! तत्र नासौ धूमः, किन्तु जलीयवाष्प एव। तस्य कज्जलजनकत्वाभावात्। 'कज्जलजनकत्वं धूमत्व'मिति धूमलक्षणात्। गुरुत्वविशिष्टेऽपि जले सूर्याग्न्योरन्यतररश्मिसमूहस्तत्र प्रविश्य तस्य लघुत्वमापाद्य वायुसाहाय्येनोर्ध्वदेशप्रापणानन्तरमेव सदैव द्रवत्वशून्यपदार्थान्तराकारमापादयति। तथाकारापन्नं जलमेव वाष्पः। तेनाग्निसूर्यवायूनामेव वाष्पकारणत्वमवधेयम्। सूर्यरश्मिस्तेजो येत्युक्तौ नालोकात्मकपदार्थो बोध्यः। प्रकाशत्वोष्णस्पर्शयोरपि तेजोधर्मत्वदर्शनात्। उष्णस्पर्शस्तापः इत्यर्थः। कस्मिँश्चित्तैजसद्रव्ये प्रकाशत्वतापावुभावुपलभ्येते, कुत्रचिच्च स्थले तदुभौ विद्यमानावप्येकोऽनुभूयतेऽपरश्च नानुभूयते। अनुभूयमानतापस्तूद्भूतस्पर्शसंज्ञां लभते। क्वचित् प्रकाशकत्वास्पष्टत्वेऽपि केवलतापयुक्तपदार्थमपि 'तेज' इति वदन्ति। छायावद्गृहादिगतव्यक्तेरपि ग्रीष्मानुभूतेः। तथाविधतेजसो जलेन सह

तज्जातीयद्रव्यमेव जलमिति बोध्यम्। यदत्र त्वया वक्तव्यं प्रथमलक्षणे रूपवत्त्वपदं, चतुर्थलक्षणे च सांसिद्धिकपदं निरर्थकमिति। तन्न। तत्र रूपवत्त्वपदानुपादाने उद्भूतरूपविशिष्टपदार्थस्यैव चाक्षुषप्रत्यक्षविषयत्वाङ्गीकारेण वायुवज्जलस्यापि चाक्षुषप्रत्यक्षविषयत्वासम्भवात्। सांसिद्धिकपदानुपादानेन च घृतजत्वादिपार्थिवद्रव्येषु सुवर्णरजतरङ्गसीसकलौहादितैजसद्रव्येषु चाग्न्यादिसंयोगजन्यद्रवत्वसन्दर्शनेन पृथिवीतेजसोरपि तल्लक्षणातिव्याप्तिः। तदुभयद्रव्ये केवलनैमित्तिकद्रवत्ववत्त्वस्यैव विद्यमानतया सांसिद्धिकद्रवत्ववत्त्वाभावान्नातिव्याप्तिः।

पु०—महोदयाः! जलस्य शीतलस्पर्शवत्त्वमात्रमङ्गीकुर्वन्ति चेत्तर्हि निगदत तावदिदानीं भक्तादिरन्धनपात्रस्य पुष्करिण्यादिभ्यश्चोर्ध्वं गमनशीलधूमः कुत उद्गच्छतीति।

पि०—वत्स! तत्र नासौ धूमः, किन्तु जलीयवाष्प एव। तस्य कज्जलजनकत्वाभावात्। 'कज्जलजनकत्वं धूमत्व'मिति धूमलक्षणात्। गुरुत्वविशिष्टेऽपि जले सूर्याग्न्योरन्यतररश्मिसमूहस्तत्र प्रविश्य तस्य लघुत्वमापाद्य च वायुसाहाय्येनोर्ध्वं देशप्रापणानन्तरमेव तदेव द्रवत्वशून्यपदार्थान्तराकारमापादयति। तथाकारापन्नं जलमेव वाष्पः। तेनाग्निसूर्यवायूनामेव वाष्पकारणत्वमवधेयम्। सूर्यरश्मिस्तेजो वेत्युक्तौ आलोकात्मकपदार्थौ बोध्यौ। प्रकाशकत्वोष्णस्पर्शयोरपि तेजोधर्मत्वदर्शनात्। उष्णस्पर्शस्ताप इत्यर्थः। कस्मिंश्चित्तैजसद्रव्ये प्रकाशत्वतापावुभावुपलभ्येते, कुत्रचिच्च स्थले तदुभौ विद्यमानावप्येकोऽनुभूयतेऽपरश्च नानुभूयते। अनुभूयमानतापस्तूद्भूतस्पर्शसंज्ञां लभते। कश्चित् प्रकाशकत्वास्पष्टत्वेऽपि केवलतापयुक्तपदार्थमपि 'तेज' इति वदन्ति। छायावद्गृहादिगतव्यक्तेरपि ग्रीष्मानुभूते। तथाविधतेजसो जलेन सह

धीरसंयोगेनापि तज्जलं वाष्पाकारेण परिणमते। सर्वत्र जले सूर्यरश्मिनिपतनेन वाष्पसृष्टिरेव जलगतनोदनस्य फलम्। सूर्यकिरणस्य तेजसो वा जलेन सह नि शब्दसंयोगो नोदनम्। कदाचिच्च जलमग्न्युत्तापजन्यटकृटमित्याकारकाव्यक्तशब्दोच्चारणेन वाष्पाकारेण परिणतं भवति। तादृशाग्निसंयोग एव 'आपीडन'मित्याख्ययाभिहित। तेनैवापीडनेनापि जलं वाष्पतामापद्यते। क्वचिच्च मृत्तिकादौ निपतितं जलं शुष्कं सत् 'संयुक्तसंयोग'-सम्बन्धेन वाष्पत्वमापद्यते। अत्र तेजःसंयोगो यदि, मरुत्संयोगश्च जले तिष्ठतीति बोध्यम्। कदाचिन्मुखरुत्कृतश्वासवाय्वाघातप्राप्तजलाद्वा कियदंशोऽपि वाष्पाकारेण परिणमते। एतेन क्वचित्स्थूलजलारम्भकसंयोगनाशकपदार्थस्यापि वाष्पकारणता ज्ञेया। पूर्वोक्ततेजो जलं वाष्पाकारेण परिणमय्य वायुमाश्रित्यैवाकाशमार्गं नीत्वा तेनैव वाष्पाकारजलेन मेघमपि सृजतीति बोध्यम्।

पु०—महोदया! तर्हि निगद्यतां तावदिदानीं हिमहिमसंहतिकरकाणां किमात्मकद्रव्यान्तर्गतत्वमिति। तासां शैत्यानुभवमादायापि न जलीयत्वं शङ्कितव्यम्। तासु सांसिद्धिकद्रवत्वघटितजललक्षणाव्याप्तेः।

पि०—वत्स! तासां जलान्तर्गतत्वं नापलपितव्यम्। वक्ष्यमाणकारणमादाय जलस्यैव तदाकारापत्तेः। ननु वृक्षलतादिपतितजलीयवाष्पं शैत्यवशाद् घनीभूतं सत् तत्तत्पदार्थाकारं धत्ते। तादृशवाष्पाकाराणुपरमाणवो दिव्यतेजसा विद्युतादृशा वा द्रवत्वशून्यद्व्यणुकत्र्यणुकाद्यवयवक्रमेण महावयविहिमहिमसंहतिकरकाकारं लभते। तासां काठिन्ये दिव्यतेजसः हेतुत्वम्। तेजःसंयोगस्यैतादृशविशेषत्वमस्ति यदेकविधतेजःसंयोगेन कुत्रचित् स्थले जलस्य काठिन्येन हिममहत्याद्याकारता जायते, कुत्रचित् स्थलेऽपरविधतेजःसंयोगेन तरल-

सापि घटत इति। विलक्षणप्रबलतेजोविशेषसंयोगेन हिमहिमसंहत्यादिनिष्ठपरमाणुषु क्रिया समुत्पद्यते, तत्क्रियया तत्तदवयवविभागस्तत्तदवयवविभागेन च तत्तद्द्व्यणुकारम्भकसंयोगविनाशो घटते। तद्वत्परमाणव इत्थं द्व्यणुकादिक्रमेण तन्महावयविपर्यन्तं विनाशयन्ति। आधुनिकानां नये तेजोऽभाव एव जलं बाष्पतुषाराद्याकारेण परिणमतीति निरूपितमस्ति। न च तासु सांसिद्धिकद्रवत्वघटितलक्षणाव्याप्तिः। तद्घटितसांसिद्धिकद्रवत्ववत्पदेन साधारणपुष्करिण्यादिजलमादाय तन्निष्ठद्रव्यत्वव्याप्यजलत्वरूपजातेर्हिमादिष्वपि विद्यमानत्वात्।

पु०—महोदयाः! यदुक्तं प्राक् भवद्भिर्जलीयबाष्पेणैव मेघवृष्टिरिति तन्नया नाङ्गीकर्त्तव्यम्। गुरुत्वविशिष्टजलस्य निरवलम्बनाकाशावस्थानासम्भवाद् वृष्टिदशायामपि तैजसपदार्थतडिदुत्पत्तेश्च।

पि०—वत्स! न चैवं वक्तुं शक्यते। वक्ष्यमाणयुक्त्या तन्निराकरणात्। वायुसंयुक्तविलक्षणतेजसोर्द्ध्वमाकृष्यमाणपूर्वोक्तबाष्पाकारपरिणतजलं तत्रैवाकाशेऽवतिष्ठते। क्रमशस्तत्र तेजोविशेषसंयोगबलेन परस्परमिलितघनीभूतबाष्पसमूह एव 'मेघ' इत्याख्यां लभते। पुनः कदाचिदधिकतरतापयुक्ततेजः संयोगेन तरलीभूते तद्बाष्पसमूहे तद्विधारकसंयोगनाशात्तदानीं गुरुत्ववशेन द्रवीभूतजलस्याधःपतनमेव वृष्टिरिति वदन्ति। वस्तुतः साधारणतो वृष्टिशब्दस्य तादृशपतनक्रियाविशिष्टजलमात्रबोधकत्वेऽपि 'कुसुमवृष्टि' 'अग्निवृष्टि' 'लाजवृष्टि'रित्यादौ व्यवहाराद्गौणविधया जलस्य यस्य कस्यापि पदार्थस्य चोपरिभागाद्विविक्ताकारेण युगपन्नानास्थानेषु पतनमपि वृष्टिरिति केचित्। तद्बाष्पगतजलस्य गुरुत्ववत्त्वेऽपि मेघो वायुतेजसां विलक्षणदृढसंयोगवशेनाकाशेऽवतिष्ठते। नारिकेलाम्रपनसादिफलघन्निरालम्बनाद्याकाशस्थस्याधःपतनं न घटते। गुरुत्वविशिष्टनारिकेलादि-

पार्थिवफलानां स्ववृन्तशाखादौ संयोगविशेषवशेन यथाऽध पतनं न भवति, किन्तु येनापि कारणेन तद्विधारकसंयोगे विनष्टे शिथिलीभूते वा तदध पतनं भवति, तथा वायुमहायसूर्यादिरश्मिभिरुद्धाकृष्यमाणवाष्पात्मकजलस्य गुरुत्ववत्त्वेऽपि मेघवायुतेजोभिः सह कस्यचित्तैजसद्रव्यस्य विलक्षणतापवशेन तद्धारणविधारकतत्तद्विलक्षणसंयोगविशेषे विनष्टे शिथिलीभूते वा तत्काठिन्याद्वाविलयनेन तदध पतनं घटत इति बोध्यम्। अध पतनं प्रति गुरुत्वस्यैव कारणत्वात्। किञ्चित्पार्थिवांशमिलितधूमज्योतिः सलिलमरुतामेव मेघाकारपरिणतिरिति केचित्। मेघाद्विद्युदुत्पत्तिप्रकारो यथा—प्रागुक्तमरुद्भिर्विलक्षणविभिन्नतापद्वयसंयोगेनैव वाष्पात्मकजले कदाचित्काठिन्यं कदाचिच्च तारल्यं समुत्पद्यत इति। तादृशविलक्षणविभिन्नतापयुक्तशैत्यस्याकाशगततापस्य च परस्परमेलनेन तन्निकटवर्तिनि मेघ, वायौ वा विद्युदुत्पद्यते। संहतद्रवीभूतमरुतोरत्यधिकतापयुक्तमेघमरुतोर्वा परस्परसंयोगेन तत्स्थाने विद्युदुत्पन्नासौ तन्निकटगतमेघान्तरेऽपि पुनरन्यविद्युतमुत्पादयति। तदानीं तदुभयविद्युतो परस्परमेलनदशायामन्तरा कश्चिन्मेघान्तरस्य अन्यवायुपार्थिवांशेष्वन्यतमस्य वा प्रतिबन्धकावरणोपस्थितौ सत्यां तद्दमनदशायां मेलनोन्मुखतद्विद्युद्द्वयपरस्पराघातजन्यघनीभूतविलक्षणतैजसमार्गं 'वज्र' इति ततो जायमानशब्दं च 'वज्रनिर्घोष' इत्याचक्षते। किञ्च कदाचित्तादृशतद्विद्युद्द्वयोपेतमहत्तद्रवीभूतजलाश्रयस्यातीवमेघखण्डस्य कस्यचिद्वायुना विक्षिप्ते विभक्तेऽपि वा वज्रनिर्घोष समुत्पद्यते। तद्विद्युद्द्वयमेलनं प्रति मेघविभाजकवायोरेव प्रतिबन्धकत्वात्। वायुना सह जलमेघयोः परस्परसंघर्षादपि विद्युदुत्पत्तिरिति केचित्। यदत्र केन विद्युत्सम्बं तैलेन्धनादिपदार्थसाहाय्येनैव लोके तैजसद्रव्योत्पत्तिदर्शनाद्राकाशे च तथाविधसहायकपदार्थाभावात्तत्र विद्युदादिरूपतैजसद्रव्यो-

त्पत्तिरसम्भाविनीति। तन्न। उपर्युक्तदिशा तदुत्पत्तौ बाधकप्रमाणाभावात्।

पु०—महोदयाः! स्थूलजलं प्रति जलीयपरमाणूनामेव कारणत्वमिति प्राग् यदुक्तं भवद्भिस्तन्मया नाङ्गीकर्त्तव्यम्। वैज्ञानिकनये 'हाइड्रोजनाक्सजन'नामकवाष्पद्वयमेलनेन जलोत्पत्तिं स्वीकृत्य तस्य यौगिकपदार्थत्वेन मौलिकपदार्थत्वानङ्गीकारात्। न चास्य यौगिकजलस्यातिरिक्तद्रव्यत्वमङ्गीकर्त्तव्यम्। योगजपार्थिवतस्तुलमतृणादीनामपि क्षित्यन्तरद्रव्यत्वाङ्गीकारापत्त्या क्षित्यादिनवद्रव्यमात्रप्रतिज्ञाहानात्। अतो जलं प्रति तादृशवाष्पद्वयस्यापि कारणत्वमङ्गीकर्त्तव्यम्।

पि०—वत्स! न चैवं वक्तुं शक्यते। स्थूलक्षित्यादिद्रव्यचतुष्टयोत्पत्तौ तत्तन्मूलकारणपरमाणूनामेव द्व्यणुकत्र्यसरेण्वादिक्रमेण तत्र कारणत्वाङ्गीकारात्। 'यत्स्थूलं न तन्मूलं, यच्च मूलं न तत्स्थूल'मिति नियमात्। परमाणुद्वयमेलनेनैको द्व्यणुकः, द्व्यणुकत्रयमेलनेनैकस्त्र्यसरेणुरिति क्रमेण महावयविपर्यन्तोत्पत्तिरित्युक्तं प्राक्। तत्र परमाणुतो द्व्यणुकान्तं द्रव्यस्य सूक्ष्मावस्थाणवस्था वा, त्र्यसरेणुतो महावयविपर्यन्तं च द्रव्यस्य स्थूलावस्था ज्ञेया। तथा तादृशजलीयद्व्यणुकोत्पादकपरमाणुद्वयसम्मेलनं, त्र्यसरेणूत्पादकद्व्यणुकत्रयसम्मेलनं चैकैकविघतेजोवायुसाहाय्येनैव घटते। पूर्वोक्तवाष्पयो'र्हाइड्रोजन'नामकवाष्पमध्ये जलीयानां परमाणूनां, सम्मिलितसमष्टिर्वर्त्तते, 'अक्सजन'नामकवाष्पे च तैजसावयवीयाश्च सूक्ष्मांशा निहिताः सन्ति। तेन हाइड्रोजननामकवाष्पेऽक्सजननामकवाष्पसम्मेलनेन अक्सजनगततेजोवायूभयसम्पर्कात् हाइड्रोजनगतजलीयपरमाणुभ्यो द्व्यणुकादिक्रमेण सरित्समुद्रान्तमहाजलावयव्युत्पत्तिः। जलीयपरमाणूनां

तज्जन्यजलस्य वा योगजत्वं नाङ्गीकर्त्तव्यम् । तेषां मूलपदार्थत्वाङ्गीकारात् । योगजपदार्थस्य परमाण्वभावाच्च । पार्थिवयोगजस्थले तु चूर्णीकृतमृदां चतुर्दिक्षु निक्षेपेण क्रमशो विच्छिन्नास्तन्मृत्सूक्ष्मसूक्ष्मांशाः परमसूक्ष्मपरमाण्वाकारपरिणताश्चाक्षुषविषयत्वमनुपलभ्यानन्तवायुहिल्लोलेन भ्राम्यमाणा आकाशेऽवतिष्ठन्ते । ते च पुनः कदाचिदेकत्रोपयुक्तसलिलतेजोवायुभिः सम्मिलिताश्चेत्तर्हि " तरुगुल्मलतादीनां दीर्घस्थूलक्षीणादिरूपोपयोगोपकरणान्यपि भवन्ति । इत्थं स्थलजलस्याव्युत्पत्तिसंहारौ निर्णेयौ । वस्तुतस्तु हाइड्रोजनाक्सिजननामकवाष्पयोर्मूलपदार्थत्वं न सम्भवति । न्यूनाधिकाकारसम्मिलितक्षितिजलतेजोवायूनामेव तत्तद्वाष्पाकारपरिणतेः । तच्च जलं द्विविधम् । नित्यानित्यभेदात् । तत्र परमाणुरूपजलं नित्यं, द्व्यणुकादिसरित्सागरप्रभृतिसर्वविधजलं चानित्यम् । तत्रानित्यजलमपि त्रिविधम् । शरीरेन्द्रियविषयभेदात् । तत्र शरीरं वरुणलोकगतानामिन्द्रियमतीन्द्रियमस्मदादीनां जिह्वाप्रवर्ति, विषयश्च हिमहिमानीकरकापुष्करिणीनदीसमुद्रादिरूपः ।

पु०—महोदया ! तिष्ठतु तर्हि, साम्प्रतं तेजःस्वरूपादिनिर्णयेनानुग्राह्य ।

पि०—वत्स ! 'भास्वररूपवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तेजस्त्व'मिति तेजोलक्षणम् । अत्र भास्वरत्वं नाम स्वप्रकाशकत्वे सति स्वेतरप्रकाशकत्वम् । तथा सति भास्वररूपविशिष्टाग्निसूर्यचन्द्रादितेजस्वस्तुनिष्ठद्रव्यत्वव्याप्यतेजस्त्वरूपजात्यधिकरणं सुवर्णरजतादिकमपि भवतीति तज्जातीयद्रव्यमपि तेन इति तल्लक्षणसमन्वयः । किञ्च—'उष्णस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तेजस्त्व'मिति । पृथिव्यादि-

द्रव्यविशेषगतपृथिवीत्वजलत्वादिजातीनां यद्यद्द्रव्यपृथिवीजलादिमात्रवृत्तित्वेन तासु द्रव्यत्वापेक्षयाल्पदेशवृत्तिनि बन्धनद्रव्यत्वव्याप्यत्व तिष्ठत्येव। यज्जातीयद्रव्ये उष्णस्पर्शस्तिष्ठति तज्जातीयद्रव्यमेव तैजसपदार्थवाच्यं भवति। तथासत्युष्णस्पर्शविशिष्टाग्निसूर्यादितेजोद्रव्य निष्ठद्रव्यत्वव्याप्यतेजस्त्वरूपजाते सुवर्णरजतलौहसीसकादिसकलविधतैजस द्रव्येष्वपि विद्यमानतया तत्रापि तेजोलक्षणसमन्वयः। परप्रकाशकत्वस्याmपि तेजस्त्वमिति केचिन्निगदन्ति।

पु०—महोदया! तत्र प्रथमोक्तलक्षणद्वयं मया नाङ्गीकर्तव्यम्। तप्तायोगोलकतप्तजलभर्जनकपालसुवर्णरजतादितैजसद्रव्येषु भास्वररूपस्य, चन्द्रसुवर्णरजतसीसकादितैजसद्रव्येषु हीरकादितैजसरत्नेषु चोष्णस्पर्शस्या विद्यमानत्वेन तत्तत्तैजसपदार्थेषु तल्लक्षणद्वयस्याव्याप्तेः।

पि०—वत्स! न चैव वक्तुं शक्यते। वक्ष्यमाणदिशा तत्तत्तैजसधातु विभेदेन स्वस्वप्रदत्ताव्याप्तिनिराकरणात्। तथाहि पूर्वोक्तं तेजश्चतुर्विधम्। किञ्चिदुद्भूतरूपस्पर्शं किञ्चिदुद्भूतरूपानुद्भूतस्पर्शं किञ्चिदनुद्भूतरूपस्पर्शं किञ्चिदनुद्भूतरूपोद्भूतस्पर्शभेदात्। तत्र येन विशेषेण रूपस्पर्शयोः प्रकाश किञ्चिदुद्भूतरूपस्पर्श। यथा सूर्यातपादिरूपतेज। एषां रूपस्पर्शयोरुभयो रेवाप्रकाशात्। किञ्चिदुद्भूतरूपानुद्भूतस्पर्शो नाम कियदंशेन रूपप्रकाशेऽपि स्पर्शाप्रकाश। यथा—चन्द्रसुवर्णादय। एषां रूपांशप्रकाशेऽप्युष्णस्पर्शांशा-प्रकाशात्। किञ्चिदनुद्भूतरूपस्पर्शो नाम केनाप्यंशेन रूपस्पर्शयोरुभयोरेवाप्रकाश। यथा—चाक्षुष तेज। तत्रोभयांशस्यैवाप्रकाशात्। किञ्चिदनुद्भूतरूपोद्भूतस्पर्शश्च कियदंशेन रूपाप्रकाशेऽपि स्पर्शप्रकाश। यथा—ग्रीष्मोष्मसन्तप्तजलतप्तायोगोलकानुभूततेज। तत्र रूपांशाप्रकाशेऽपि स्पर्शांश-

प्रकाशात्। तैजसद्रव्यमात्रस्य प्रोक्तचतुर्विधतेजोऽन्तर्गततया कुत्रचिदुष्णस्पर्शस्य कुत्र चिद्भास्वररूपस्य चादर्शनेऽपि तत्र तैजसत्वं नापलपेत्। तत्रोष्णस्पर्शभास्वररूपाबोधे क्वचिज्जलीयांशस्य, क्वचिद्वा पार्थिवांशस्य प्रतिबन्धकत्वाङ्गीकारात्। यत्तत्तैजसद्रव्ये भास्वररूपोष्णस्पर्शबोधो न भवति तत्तद्द्रव्येऽपि तैजसत्वमनुमातव्यमेव। तैजसद्रव्यातिरिक्तद्रव्येषूष्णस्पर्शवत्त्वादिधर्मासम्भवात्।

पु०—महोदया ! प्रदीपादिगतवह्नेरूर्द्ध्वगमनं कुतो घटत इति निरूपणीयमत्र कृपया।

पि०—वत्स ! प्रदीपादिगतवह्निशिखामध्ये वक्ष्यमाणपदार्था नियततयावतिष्ठन्त एव। ते तु तेजो वर्त्तिकेन्धनादिपार्थिवद्रव्यपदार्थाः, जलीयबाष्पौ, वायुराकाशश्चेति। प्रज्वलिताग्निगतोष्णवायुबाष्पयोरूर्द्ध्वगमनेनाग्नेरप्यूर्द्ध्वगमनं घटते। प्रदीपादिगतवह्निशिखामध्ये प्रदीपादिमित्रस्थानीयानां पूर्वोक्ततेजोवर्त्तिकेन्धनोष्णवाष्पवाय्वाकाशानामभावे जायमानेऽग्निगतशिखोर्द्ध्वं नैव गच्छेत्। गुरुत्वविशिष्टपदार्थानामधोगमनस्य, लघुत्वविशिष्टपदार्थानां चोर्द्ध्वगमनस्य स्वाभाविकतया स्वाभाविकलघुत्वविशिष्टवायोर्जलांशमादाय गुरुत्वलम्भेऽपि तैजसपदार्थसंयोगेनासौ पुन स्वाभाविकलघुत्वं लभते। प्रागुक्तस्माभिर्विलक्षणतेन संयोगेनैव जल बाष्पाकार धत्त इति। तेन संयोगस्य स्पन्दनसापेक्षतया वर्त्तिकादिद्रव्यवस्तुषु सति वह्न्यादितेन संयोगे, तत्तद्वस्तुनि स्वतोर्द्ध्वगमनशीलबाष्प प्रोक्तलघुत्वावस्थापन्नवायुना सह प्रदीपादिशिखाया प्रविश्य शामेव शिखां, तादृशाविच्छिन्नतैजसावयव चोर्द्ध्वमाकर्षयेत्। तत्तच्छिखोर्द्ध्वप्रापणं प्रति बाष्पवाय्वोरुभयोरेव कारणता। तदानीमग्निशिखा

नैव विच्छिन्ना भवति। तत्र तैजसावयवानां प्रबलाकर्षणात्। वायोर्लघुत्वे, पृथिवीजलयोश्च बाष्पत्वे तेजःसंयोगस्यैव हेतुता बोध्या।

पु०—पितरः! प्रदीपादिशिखानामूर्द्ध्वगमनकाले तेजःसंयोगे स्पन्दनं मया माङ्गीकर्त्तव्यम्। केवलवायुगतस्पन्दनस्वीकारेणैव कार्यसिद्धेः।

पि०—वत्स! यदि त्वं केवलवायुस्पन्दनेन तेजःसंयोगादेव दाह्यवस्तुनिर्गतबाष्पस्य तत्रस्थवायोश्च लघुतासम्पत्त्या तदूर्द्ध्वगमनकाले दीपादिगतवह्निशिखाया अप्यूर्द्ध्वगमनं भवतीत्यङ्गीकुर्यास्तर्हि तप्तायःपिण्डादिगतवह्नेरप्यूर्द्ध्वगमनमङ्गीकरिष्यसि। तदानीं तत्र लघुतापन्नोर्द्ध्वगमनशीलवायोरपि विद्यमानत्वात्। दीपचूल्ल्यादिप्रज्वलनकाले तैलेन्धनादिदाह्यवस्तुस्पन्दनस्याग्निसंयोगापेक्षत्ववत्तेजःसंयोगे दाह्यवस्तुस्पन्दनमात्राङ्गीकारे तत्तत्स्पन्दनात्प्राक् तैजसोऽपि स्पन्दनमङ्गीकर्त्तव्यम्। पूर्वोक्ताग्निसंयोगोऽपि तत्पूर्वतनाग्निसंयोगापेक्षः। तथा सति प्रथमं तेजः स्पन्दते, स्पन्दितं तदेव तेजः स्वसंयुक्तोपयुक्तदाह्यपदार्थाद्बाष्पं संसृज्य वायोरपि लघुतां सम्पादयति। एतत्कार्यसमुदायस्य पौर्वापर्यभावसत्त्वेऽपि तद्बोधो न भवति। तत्तत्कर्मणोऽतिसत्वरनिष्पन्नत्वात्। न चात्र पौर्वापर्यमपलपितव्यम्। कार्यकारणभावहानिप्रसङ्गात्। अयोगोलकाग्नौ वायुनाग्निशिखोर्द्ध्वगमनाभावसन्दर्शनेन तत्र स्पन्दननिमित्ताग्निसंयोगो नापलपितव्यः। तत्र तथाविधाग्निसंयोगसत्त्वेऽपि तदन्याश्रयलौहांशस्य गुरुत्वप्रयुक्तस्थिरपदार्थत्वेन तस्य बाष्पसमूहोत्पादकोपकरणत्वाभावात्। तेनैव हेतुनायोगोलादिगुरुपदार्थगताग्निशिखा तत्सहायक्रान्तरवायोस्तत्र सत्त्वेऽप्यूर्द्ध्वं नैव गच्छतीति बोध्यम्। प्राथमिकतेजःस्पन्दनं प्रति भोक्तृपुरुषादृष्टस्यैव कारणत्वमित्याहुः पूज्यपादाः

कणादमहर्षयः । एतत्सर्वं पदार्थस्वभाव एवेत्याहुः पदार्थस्वभाववादिनः ।

पु०—पितरः ! अस्तु तर्हि, निरूप्यतां तावदत्र साम्प्रतं दिग्दाहोल्कापातनक्षत्रधूमकेतुभूकम्पानां किं स्वरूपम् ? तेषां तैजसत्वम् ? न वा ? कुतो वा तत्तत्कर्माणि घटन्तेऽस्मिँल्लोक इति ।

पि०—वत्स ! प्राणिसमूहाशुभादृष्टमूलकभूकम्पाद् वृक्षलतादि-पार्थिववस्तूनां परस्परसंघर्षाद्वा समुत्पन्नवह्निरूपतेजस्तन्निकटवर्तिनो विविधवृक्षलतादीन् विविधप्राणिनश्च दहति, तथाविधदाहं 'दिग्दाह' इति वदन्ति । तथाविधदाहं प्रति तेजसः समवायिकारणत्वं, निमित्तकारणत्वं च मरुदादेरदृष्टस्य चेत्यवधेयम् । आकाशमण्डलात्पतनशील-तेजस्विनक्षत्राण्येवोल्का । पुच्छविशिष्टो नाभसो ज्योतिर्विशेष एव धूमकेतुः । प्राण्यशुभादृष्टवशाद्वायुसाहाय्येन पृथिव्युत्पन्नाकस्मिकक्रियैव भूकम्पः । तेषु दिग्दाहादिधूमकेत्वन्तानां तैजसपदार्थत्वमन्तिमभूकम्पस्य च वक्ष्यमाणकर्मपदार्थान्तर्गतत्वम् । प्राणिक्षयहेतुकाशुभादृष्टवशेनैव नक्षत्रातिरिक्ताःभसवारो लोके, सम्भवन्तीति ज्योतिषपुराणादिडिण्डिमः । तच्च तेजो द्विविधम् । नित्यानित्यभेदात् । तत्र परमाण्वात्मकतेजो नित्यं, द्व्यणुकादिमहाण्डपर्यन्ततेजश्चानित्यम् । तत्रानित्यतेजोऽपि त्रिविधम् । शरीरेन्द्रियविषयभेदात् । तत्र तैजसशरीरमयोनिजमादित्यलोकादिप्रसिद्धमिन्द्रियमतिसूक्ष्मं प्राणिचक्षुर्गोलकगतकृष्णतारापवर्त्ति, विषयश्च सुवर्णरजतलोहसीसकादिरूपः । तत्रास्य विषयोऽपि चतुर्विधः । भौमदिव्यौदर्याकरजभेदात् । तत्र वह्न्यादिकं भौममिन्धनविद्युदादिकं दिव्यं, भुक्तद्रव्यपरिपाकहेतुभूतजठरानलाख्यपित्तमौदर्यं, सुवर्णरजतादिकं चाकरजमिति ।

पु०—पितरः ! भवतु तर्हि, साम्प्रतं वायुस्वरूपादिनिर्णयेनानुग्राह्यः ।

*पि०—वत्स !* 'रूपरहितत्वे सति स्पर्शवत्त्वं, रूपासमानाधिकरणस्पर्शवद्वृत्तिजातिमत्त्वं वा वायुत्व'मिति वायुलक्षणम् । यज्जातीयद्रव्ये रूपं न तिष्ठति केवलस्पर्शस्तिष्ठति तज्जातीयद्रव्यमेव वायुरिति प्रथमलक्षणार्थः । प्रथमलक्षणे विशेषणानुपादाने स्पर्शगुणविशिष्टपृथिव्यप्तेजःस्वतिव्याप्तेस्तद्वारणाय तदुपादानम् । तेषु वक्ष्यमाणरूपसत्त्वेन रूपरहितत्वाभावान्नातिव्याप्तिः । विशेष्यांशानुपादाने रूपरहिताकाशकालदिगात्ममनःस्वतिव्याप्तेस्तद्वारणाय तदुपादानम् । तेषां रूपरहितत्वेऽपि स्पर्शवत्त्वाभावान्न *तत्रातिव्याप्तिः । रूपाधिकरणघटपटादिवस्तुन्यविद्यमाना स्पर्शविशिष्टवायौ विद्यमाना या वायुत्वरूपा जातिः सा वायावेवावतिष्ठत* इति द्वितीयलक्षणसमन्वयः । 'रूपाधिकरणाविद्यमानजातिविशिष्टद्रव्यमेव वायु'रित्युक्तौ रूपाधिकरणघटपटाद्यविद्यमानाकाशत्वादिधर्मविशिष्टाकाशादिद्रव्येष्वतिव्याप्तेस्तद्वारणाय स्पर्शवद्वृत्तिजातिमत्त्वपदोपादानम् । आकाशादिद्रव्यपक्षके रूपाधिकरणावृत्तिस्पर्शवद्वृत्तिवायुत्वरूपजात्यभावात्तत्र न तल्लक्षणातिव्याप्तिः । 'स्पर्शवद्वृत्त्यवगानजातिविशिष्टद्रव्यमेव वायु'रित्युक्तौ पृथिव्यप्तेजःस्वतिव्याप्तेस्तद्वारणाय रूपासमानाधिकरणपदोपादानम् । तेषां स्पर्शवद्वृत्तिजातिमत्त्वेऽपि रूपासमानाधिकरणतादृशजातिमत्त्वाभावान्नातिव्याप्तिः । स्पर्शशब्देनात्रापाकजानुष्णाशीतस्पर्शो बोध्यः । तस्य स्पर्शकालीनगतिर्वक्रैव भवति । तस्य तत्कालीनगतिवक्रत्वे को हेतुरिति चेदुच्यते—प्राणिमात्रस्य सुखदुःखे प्रति वायोः कारणत्वेन तस्य प्राणिमात्रादृष्टमूलकप्रायमिकगतिरुत्पद्यते, ततश्च तद्गतिवेगप्रयुक्तधारावाहिकगतिरुत्पद्यते । नैवास्य वक्रगतिरपलपितव्या । तस्य वक्रगतिमन्तरेण सकल-

लोकानां सर्वत्र गमनासम्भवेन सर्वेषां सर्वत्रानुपलब्धिप्रसङ्गात्। वाय्वभावेन प्राणिनो न जीवेयुः। तस्य जीवनस्वरूपत्वात्। इंग्लण्डादिशीतप्रधानदेशवासिनस्तत्तद्देशेषु स्थातुं न पारयेयु र्नापि वृष्ट्यादिकं किमपि भवेत्। अतस्तस्य पञ्चमातिरङ्गीकर्त्तव्यैव।

पु०—पितरः! प्रथमं वायोरस्तित्वं मया माङ्गीकर्त्तव्यम्। तस्याक्षपिद्रव्यत्वेन केषामपि प्रत्यक्षविषयत्वाभावात्।

पि०—वत्स! नैवं वक्तुं युज्यते। तस्य चाक्षुपप्रत्यक्षविषयत्वाभावेऽपि वक्ष्यमाणकार्यकलापैस्तदनुमानात्। दृश्यते हि लोकेऽनेकदा कदाचिच्छरीरादौ 'सल् सल्' स्पर्शबोधः, कदाचिन्निरवलम्बाकाशोड्डीयमानधूलिपटलगततृणपत्रादिविविधवस्तुदर्शनम्, कदाचिच्च तत्रैवाकाशे 'साइँ साइँ' इत्याकारकाव्यक्तशब्दश्रुतिः। नास्य वायोः स्पर्शानुभवेन केवलतद्गतस्पर्शमात्रस्य त्वाचप्रत्यक्षविषयत्वमङ्गीकर्त्तव्यम्। वायुगतस्पर्शगुणानुभवेन वायोरप्यनुमानात्। किञ्च निरवलम्बाकाशोड्डीयमानतृणलताधूल्यादिविधारकपदार्थ एव वायुरित्यनुमिनुयात्। गुरुत्वविशिष्टतत्पदार्थविधारकपदार्थान्तराभावे तेषां निरवलम्बाकाशावस्थानासम्भवात्। अनुमानान्तरं यथा—वायो विद्यमानत्वं मापलपितव्यम्। समयविशेषे यत्र कुत्राप्यावद्धगृहाद्यवस्थितपुरुषस्यापि पूर्वोक्तोत्कट'साइँ साइँ' इत्याकारकाव्यक्तशब्दश्रवणसम्भवात्। न च पूर्वोक्त'सल् सल्'स्पर्शो पृथिव्यप्तेजसां सम्भवति। तथाविधस्पर्शात्प्राक् बहुक्षणमेकत्रावस्थितव्यक्तिशरीरे तादृश 'सल् सल्'स्पर्शानुभवक्षणे तत्स्थानागतपृथिवीजलतेजसामवश्यं चाक्षुषप्रत्यक्षविषयत्वौचित्यात्। चेष्टाशतेनापि तानि नैव नयनगोचराणि भवन्ति। अतस्तादृशस्पर्शः कस्यचित्तदतिरिक्तगूढद्रुतिशीलपदार्थस्यैवेत्यनुमेयम् तथाविधगूढद्रुगतिशीलपदार्थोऽनुभूयमानस्पर्शस्य व्यापको न भवेत्

तथाविधगतिशीलपदार्थसम्बन्धस्य केनाप्यननुभूयमानत्वात्। तादृशपदार्थविषयकज्ञानस्यापि प्रत्यक्षमूलकत्वाभावाच्च। अत प्रोक्तानुमानसिद्धदृढगतिशीलपदार्थ एव वायुरिति बोध्यम्। वायुसाधकानुमितिकारणीभूतव्याप्तिज्ञानमपि वह्निधूमगतव्याप्तिज्ञानवत्प्रत्यक्षमूलकं न भवति, किन्त्वदृष्टमूलकमेवेति कणादमहर्षेरभिमतम्। यच्च येन चिह्नेन सर्वत्रैवानुमितिः प्रत्यक्षमूलकव्याप्तिज्ञानजन्यैव भवतीति। तन्न। क्वचिदप्रत्यक्षमूलकव्याप्तिज्ञानजन्यानुमितेरप्यभ्रान्तत्वदर्शनात्। सर्वत्रास्या प्रत्यक्षमूलकव्याप्तिज्ञानजन्यत्वं नैव सम्भवति। तथात्वाङ्गीकारे केनापि सह कस्यापि परस्परव्यवहारासम्भवात्। परस्पराभिप्रायज्ञानमन्तरेण परस्परव्यवहारो न सम्भवतीति द्रष्टव्यम्। येन सह व्यवहर्त्तव्यं प्रथमं तदभिप्रायज्ञानस्यावश्यकत्वात्। पराभिप्रायज्ञानं प्रत्यक्षमूलकव्याप्तिज्ञानजन्यं कथमपि न स्यात्। अन्यमनोगतभावविषयेऽपरस्य प्रत्यक्षविषयत्वासम्भवात्। अत क्वचित्स्थलेऽनुमिते प्रत्यक्षमूलकव्याप्तिज्ञानजन्यत्वाभावेऽपि तस्या अभ्रान्तत्वमस्तीत्यवधेयम्। अनुमितिव्याप्तिज्ञानादिकमनुमानखण्डे निरूपयिष्यामः।

पु०—पितः! तथापि वायुसिद्धौ भवदुक्तदिशानुमानप्रमाणं मया नाङ्गीकर्त्तव्यम्। त्वगिन्द्रियेणापि तत्प्रत्यक्षसम्भवात्।

पि०—वत्स! न चैव वक्तुं युज्यते। पूर्वाचार्यैस्त्वाचप्रत्यक्षं प्रति रूपस्यापि कारणत्वमङ्गीकृत्य रूपविशिष्टपदार्थस्यैव त्वाचप्रत्यक्षविषयत्वाङ्गीकारात्। अन्यथान्धकारगृहाद्यवस्थितघटपटादिनिष्ठाकृतिसङ्ख्यादीनां त्वाचप्रत्यक्षविषयत्ववद्वायुनिष्ठसङ्ख्यापरिमाणादीनामपि त्वाचप्रत्यक्षविषयत्वापत्तेः। 'यद्वस्तु यदिन्द्रियग्राह्यं भवति, तद्वस्तुगतसङ्ख्यापरिमाणजात्यादियावद्धर्माणामपि तदिन्द्रियग्राह्यत्वमस्तो'ति नियमात्। न च वायोस्त्वाच-

प्रत्यक्षविषयत्वमस्ति । तद्गतसंख्यापरिमाणादीनां त्वाचप्रत्यक्षविषयत्वासम्भवात् । एतन्मतं गोतमा न सहन्ते । तन्मते शरीरादौ वाय्वाघातदशायां तद्वस्तुविषयकज्ञानमेव त्वाचप्रत्यक्षमित्यङ्गीकृत्य निःश्वासप्रश्वासादिरूपवायुगतसंख्यापरिमाणादीनामपि त्वाचप्रत्यक्षविषयत्वमिति स्वीकारात् । क्वचित्पदार्थान्तरप्रतिबन्धकतावशेन तत्प्रत्यक्षाभावेऽपि न कापि हानिरिति तेषामभिप्रायः ।

पु०—पितर ! तथापि वायोः प्रोक्तद्रव्यपदार्थान्तर्गतत्वं मया नाङ्गीकर्तव्यम् । वायवीयपरमाणूनां द्रव्यासमवेतत्वेनाद्रव्यस्वरूपतया तज्जन्यवायोरपि द्रव्यत्वासम्भवात् । अन्याकाशादिवत्परममहत्परिमाणाकाराभावेऽपि तद्गतमहत्परिमाणानुमानेन तद्गतस्पर्शोऽपि महाननुभूयते । नास्य द्रव्यासमवेतत्वमपह्नवितव्यम् । सर्वविधपरमाणूनां निरवयवत्वेनैतद्वायवीयपरमाणूनामपि निरवयवत्वात् । न चास्य द्रव्यत्वं सम्भवति । द्रव्यासमवेतपदार्थानां गुणत्वादिजातिवद्द्रव्यत्वासम्भवात् ।

पि०—वत्स ! न चैव वक्तुं शक्यते । आकाशकालदिगात्ममनसां द्रव्याश्रितत्वाभावेऽपि द्रव्यसमवेतत्वाभावेऽपि वा तेषां द्रव्यत्वाङ्गीकृतिवत्परमाणूनां द्रव्याश्रितत्वाभावेऽपि तेषामपि द्रव्यत्वाङ्गीकारे बाधाभावात् । अन्यद्रव्यमात्रं हि क्वचित्साक्षात्सम्बन्धेन क्वचिच्च परम्परासम्बन्धेन द्रव्यसमवेतं द्रव्याश्रितं वा भवति । स्थूलवायोरुपादानभूतपरमाणूनां निरवयवत्वेनैव द्रव्याश्रितत्वं न सम्भवति । न कोऽपि वायवीयपरमाणूनां द्रव्यत्वमपहरति । स्पन्दनक्रियामन्तरेण परमाणुद्वयसंयोगासम्भवतया, तत्संयोगमन्तरेण द्व्यणुकानुत्पत्त्या, द्व्यणुकमन्तरेण च त्र्यसरेण्वादिक्रमेण स्थूलवाय्वनुत्पत्त्या तत्कारणीभूतपरमाणुषु स्पन्दनादिक्रियाणां संयोगादि-

गुणाना च विद्यमानत्वानुमानात्। तदीयपरमाणुषु गुणक्रियापलपनम युक्तम्। तत्र स्थूलवायुगतगुणक्रियादर्शनात्।

पु०—पितर! अस्तु वा तथा, किन्त्वस्य वायो केवलवक्रगतिर्मया नाङ्गीकर्त्तव्या। धूलिपटलादावनेकदास्योर्द्ध्व गतिदर्शनात्।

पि०—वत्स! न चैव वक्तु शक्यम्। प्रतिकूलवर्त्तिदिग्द्वयसमागत-जलप्रवाहपरस्परसंघर्षणेन तत्स्रोतोमध्यवर्तिजलाशस्योर्द्ध्व गतिवत्साहश-दिग्द्वयसमागतवायुद्वयसंघर्षणेन तदन्त पातिधूलितृणादिवस्तूना वायु वेगोर्द्ध्व गमनेन वायूर्द्ध्व गमनानुमानात्। वस्तुतो नास्योर्द्ध्व गति स्वाभाविकी। विभिन्नप्रतिकूलदिकसमागतवायुपरस्परसंघर्षस्यैव तस्यार्द्ध्व-गमनहेतुत्वदर्शनात्। स च वायुर्द्विविध। नित्यानित्यभेदात्। तत्र परमाणुरूपवायुर्नित्यो द्व्यणुकादिमहावयविपर्य्यन्तवायुश्चानित्य। तत्रा-नित्यवायुरपि त्रिविध। शरीरेन्द्रियविषयभेदात्। तत्र वायुलोकगताना पिशाचादीना च शरीर वायवीयम्। वायुलोकस्यवायवीयशरीरं पुण्यजन्य पिशाचादिवायवीयशरीरं च पापजन्यमित्येतावान् तदुभयवायवीयशरीरगत भेदो ज्ञेय। इन्द्रियमस्मदादिजीवसर्वशरीरव्यापिनी त्वक्। विषयश्च त्र्यसरेण्वादिमहावयविपर्य्यन्तवायवो वृक्षादिकम्पन चापि। वायोरेक-स्याप्युपाधिभेदेनाधारस्थानभेदेनासौ प्राणादिसज्ञा लभते। "हृदि प्राणो गुदेऽपान समानो नाभिसंस्थित। उदान कण्ठदेशे स्याद्व्यान सर्वशरीरग"-इति वृद्धवचनात्। एषा कार्य्याण्यपि दृश्यन्ते यथा—तत्र मुखनासिकाभ्या प्रवेशनिर्गमनरूपकार्यं प्राणवायो, मलाद्यधोनयनरूपकार्यमपानवायो, आहारपरिपाकार्थं जाठराग्निसमुत्थयनरूपकार्यं समानवायो, विपाकरसाद्यूर्द्ध्व-नयनरूपकार्यमुदानवायो, नाडीद्वारा सकलशरीरसचरणरूपकार्यं च व्यान-वायोरिति। कपिलमतावलम्बिन साख्या वेदान्तिनश्च वायो क्रियाभेद-

माश्रित्य प्राणादिपञ्चवायुभिन्न नागकूर्मकृकरदेवदत्तधनञ्जयाख्यवायुपञ्चकमङ्गीकृत्य तेषां वक्ष्यमाणकार्याणि निर्णयन्ति। यथा—तेषु येन वायुना वमनं घटते स नागः, येन नयनयोर्निमीलनोन्मीलने घटेते स कूर्मः, येन क्षुधापिपासे समुत्पद्येते स कृकरः, येन जृम्भणं भवति स देवदत्तः, येन च शरीरपुष्टिर्घटते स धनञ्जय इति। "उद्गारे नाग आख्यातः कूर्मस्तून्मीलने स्मृतः। कृकरस्तु क्षुधि ज्ञेयो देवदत्तो विजृम्भणे। न जहाति मृतं चापि सर्वव्यापी धनञ्जयः" इति तत्साम्प्रदायिकोक्तेः।

पु०—पितः! वायोः स्पर्शप्रत्यक्षवत्तद्गतरूपस्य प्रत्यक्षत्वमङ्गीकृत्य तद्रूपप्रत्यक्षत्वेन वायोरपि प्रत्यक्षत्वं मयाङ्गीकर्त्तव्यम्। समवायस्यानेकत्वमङ्गीकृत्य स्पर्शसमवायरूपसमवाययोरभिन्नत्वेन वायौ स्पर्शसमवायवद्रूपसमवायस्यापि सत्त्वात्तद्गतरूपस्यापि प्रत्यक्षत्वापत्तेः। घटपटादिगतरूपप्रत्यक्षेण घटपटादिप्रत्यक्षवद्वायुरूपप्रत्यक्षेण वायोरपि प्रत्यक्षत्वापत्तेश्च।

पि०—वत्स! तादृशसम्बन्धमादाय वायौ रूपवत्ता नाङ्गीकर्त्तव्या। वायौ रूपसंस्काराभावात्। रूपसंस्कारपदेनात्र रूपसमवाय उद्भूतानुद्भूतात्मकसम्बन्ध इति यावत्। वायौ रूपसंस्कारसत्त्वे तत्प्रत्यक्षं भवति नान्यथा। यद्वस्तुनि रूपं तत्सम्बन्धिसम्बन्धश्च विद्यते तद्वस्त्वेव रूपसमवायान्वितत्वाङ्गीकारात्। अतो वायौ स्पर्शसमवायसत्त्वेऽपि रूपसमवायान्वितत्वस्वीकारोऽनुचित एव इति ज्ञेयम्।

पु०—पितः! तिष्ठतु तर्हि, साम्प्रतमथाकाशस्वरूपादिनिरूपणेनानुगृह्यताम्।

पि०—वत्स! साङ्ख्यास्तावदाकाशस्वरूपमित्थं वर्णयन्ति; यथा—
यत्पदार्थैः स्पर्शविशिष्टपदार्थानां प्रवेशनिर्गमौ घटेते स एवाकाशः।

आकाशोऽवकाश इत्यर्थः। तथा चात्रानुमानम्। यथा वायोः स्पर्श-विशिष्टस्य यस्य कस्यापि पदार्थस्य वा प्रवेशनिर्गमौ सति भित्त्यादिव्यवधाने यत्पदार्थाभावेन न सम्भवतः, स एवाकाशो भवितुमर्हति। तस्याव-काशात्मकत्वात्। 'प्रवेशनिर्गमजन्यसंयोगविभागौ स्पर्शाभावविशिष्ट-पदार्थेन सहैव सम्भवतः। तयोर्विलक्षणसंयोगविभागाकारेणावबोधित-त्वा'दित्यनुमानेन स्पर्शाभावविशिष्टाकाशपदार्थसिद्धिः। स्पर्शरहितद्रव्यस्य स्पर्शविशिष्टद्रव्यस्य च संयोगविभागयोरेकाकारस्वाभावादिति तेषामभि-प्रायः। एतन्मतं कणादमहर्षयो न सहन्ते। तन्मते प्रवेशनिर्गमनादि-कर्मणां प्रविष्टनिर्गतवस्तुमात्राश्रितत्वेन तैः सहाकाशस्य व्याप्तिनिर्वाहक-सम्बन्धाभावेन तेषामाकाशानुमापकत्वासम्भवात्। यत्कर्म यद्द्रव्याश्रितं भवति तत्तद्द्रव्यं तत्तत्कर्मणां समवायिकारणमेव भवति। कर्मणां द्रव्येषु समवायसम्बन्धेन सत्त्वात्। क्रियां प्रत्याकाशस्य समवायिकारणत्वं न सम्भवति। तस्य व्यापकत्वेन क्रियावत्त्वासम्भवात्। नापि पूर्वोक्तानु-मानमाकाशसाधकं भवितुमर्हति। अनुमानमात्रस्य व्याप्तिज्ञानसापेक्ष-तयाकाशेन सह प्रवेशनिर्गमनादिकर्मणां परस्परव्याप्तिनिर्वाहकसम्बन्धा-भावात्। क्रियां प्रत्याकाशस्य समवायिकारणत्वाभाववदसमवायिकारण-त्वमपि न सम्भवति। आकाशोत्पादकद्रव्ये द्रव्यत्वस्य, गुणकर्मणोश्चा-समवायिकारणत्वस्य विद्यमानत्वेन तदुभयधर्मयोः परस्परविरुद्धस्वभाव-त्वात्। प्रोक्तासमवायिकारणलक्षणद्वयमपि तत्रासम्भवदोपदुष्टं भवति। निरवयवे नित्ये चाकाशात्मकद्रव्येऽवयव्यवयवात्मकपदार्थद्वयस्यैकदा समवायसम्बन्धेनाविद्यमानत्वेन प्रथमलक्षणस्यावयविद्रव्योत्पत्तेः प्रागवयव-द्रव्येषु गुणकर्मरूपपदार्थद्वयस्य समवायसम्बन्धवृत्तित्वदर्शनेनावयविद्रव्य-स्यावयवनिष्ठगुणकर्मादिकं प्रति कारणत्वाभावेन च द्वितीयलक्षणस्य तत्र

गमनासम्भवात्। नाप्याकाशस्य तत्क्रियां प्रति निमित्तकारणत्वमपि सम्भवति। मनुष्यादिप्राणिगततायात्तद्दशायां द्वारभित्त्यादिसंयोगे जायमाने गमनादिवेगप्रतिबन्धकतत्तत्संयोगस्यैव प्रवेशनिर्गमादिक्रियाप्रतिबन्धकस्येनाकाशाभावेऽपि प्रवेशनिर्गमादिक्रियासम्भवात्। आकाशावकाशयोरेकपदार्थत्वं नाङ्गीकर्त्तव्यम्। भित्त्याद्यभ्यन्तरेऽप्याकाशसद्भावात्। यद्यत्र केनापि वक्तव्यमाकाशस्यैव गमनादिक्रियानिमित्तकारणत्वं, किन्तु वेगादिप्रतिबन्धकता भित्त्यादिसंयोगस्य नास्तीति। तन्न। भित्त्यादिव्यवधायकसत्त्वेऽपि प्रवेशनिर्गमादिक्रियासद्भावापत्तेः। यदि पुनः केनापि वक्तव्यं भित्त्यादिसंयोगस्यैव वेगप्रतिबन्धकत्वमिति। तत्रास्माकमिष्टापत्तिः। वेगाभावस्यैव तत्तत्कर्माभावस्वरूपत्वाङ्गीकारेण कार्यसिद्धेराकाशस्य निमित्तकारणत्वाङ्गीकरणवैफल्यात्। अतः शब्दस्यैवाकाशानुमापकत्वमङ्गीकर्त्तव्यम्। पृथिव्यादिजन्यद्रव्यनिष्ठविशेषगुणानां तदीयसमवायिकारणगतविशेषगुणसम्भूतत्वमङ्गीकर्त्तव्यम्। पटादिगतशुक्लरूपादीनां तत्कारणतन्त्वादिगतशुक्लादिरूपजन्यत्वदर्शनात्। शब्दोऽपि विशेषगुणः। 'जातिमत्त्वे सति बाह्यैकैकेन्द्रियमात्रग्राह्यत्वं विशेषगुणत्व'मिति तल्लक्षणात्। विशेषगुणास्तावद्रूपगन्धस्पर्शस्नेहसांसिद्धिकद्रवबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्कारा एव। "रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः। बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः" इति प्राचीनोक्तिदर्शनात्। एषां स्वरूपं गुणनिरूपणावसरे वक्ष्यामः। अवयविद्रव्येष्ववयवद्रव्यनिष्ठगुणा अव्यभिचारेणैवावतिष्ठन्ते। द्रव्यस्यावयवावयविभेदेन द्वैविध्यात्। यथा तन्तुगतरूपं पटे कपालगतरूपं च घटेऽवतिष्ठते। तर्हि वर्णध्वन्यात्मना श्रूयमाणः शब्दः पृथिव्यादिद्रव्येषु कस्य गुणो भवेदिति प्रश्नोऽवश्यम्। नासौ शब्दः स्पर्शगुणविशिष्टपृथिव्य-

तेजोवाय्वात्मकद्रव्याणां गुणो भवितुमर्हति । पूर्वोक्तदिशावयवावयविनोरुभयत्रैवैकाकारशब्दश्रवणौचित्येन मृदङ्गशब्दस्य मृदङ्गावयवेषु, वीणाशब्दस्य च वीणावयवेषूपलब्ध्यापत्तेः । न कालदिशोः । तयोररूपिद्रव्यतया तदुभयगतगुणाप्रत्यक्षत्ववच्छब्दस्याप्यप्रत्यक्षत्वापत्तेः । नात्मनः, आत्मनिष्ठगुणानामन्तरिन्द्रियमनोमात्रग्राह्यत्वेन तदिन्द्रियविशिष्टबधिरस्यापि मृदङ्गादिशब्दानुभवापत्तेः । 'अहं शब्दं शृणोमी'त्याकारकानुभवस्थले 'अहं सुखी' 'अहं दुःखी' चेत्याद्याकारकानुभववत् 'अहं शब्दवानि'त्याकारकानुभवापत्तेश्च । नापि मनसः । तस्यातीन्द्रियत्वेनाणुत्वेन च तद्गतपरिमाणादिगुणाप्रत्यक्षत्ववच्छब्दस्याप्यप्रत्यक्षत्वापत्तेः । अत आकाशस्यैव गुण इत्यङ्गीकर्त्तव्यम् । न चाकाशसद्भावे प्रमाणाभावः शङ्क्यः । शब्दगुणकत्वस्यैव तत्र प्रमाणत्वात् । न च शब्दस्य गुणत्वमपलपितव्यम् । 'अनित्यत्वे सत्येकैकेन्द्रियग्राह्यपदार्थजातीयत्वाद्रूपादिव'दित्यनुमानेन तस्य गुणत्वसिद्धेः । 'शब्द आकाशेतराष्टद्रव्याश्रितो भवितुं नार्हति, श्रोत्रेन्द्रियग्राह्यत्वाच्छब्दत्ववदि'त्यनुमानेन तस्याकाशेतराष्टद्रव्याश्रितगुणत्वाभावसिद्धौ 'शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितो भवितुमर्हति प्रोक्तद्रव्यानाश्रितत्वे सति गुणत्वा'दित्यनुमानेनाकाशसिद्धिः । आकाशोऽपि पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यपदार्थ एव । 'श्रोत्रेन्द्रियग्राह्यः शब्दः किञ्चिद्द्रव्याश्रितो भवितुमर्हति, गुणत्वाद्रूपादिव'दित्यनुमानेन शब्दस्य प्रोक्ताष्टद्रव्यगुणत्वनिरसनद्वारेणासावाकाशस्यैव गुण इति निश्चिनुयात् । वायवीयपरमाणूनां गुणवत्त्वेन यथा द्रव्यत्वं, द्रव्यानाश्रितत्वेन च नित्यद्रव्यत्वं निर्णीयते, तथाकाशस्य शब्दादिगुणवत्त्वेन द्रव्यत्वं, द्रव्यानाश्रितत्वेन च नित्यद्रव्यत्वं निर्णेयम् । अस्य वक्ष्यमाणसत्ताजातिवदेकत्वमपि । तस्यानेकत्वे प्रमाणाभावात् । स चाकाशो विभुरपि ।

सर्वमूर्तद्रव्यसंयोगित्वात्। मूर्तत्वं नाम क्रियावत्त्वम्। पृथिव्यप्तेजोवायुमनांस्येव मूर्तद्रव्याणि। पृथिव्याद्याकाशान्तद्रव्याणि भूतपदवाच्यान्यपि भवन्ति। भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। न चास्य चाक्षुषप्रत्यक्षविषयत्वं सम्भवति। अरूपिद्रव्यत्वात्। यद्यत्र त्वया वक्तव्यं परममहत्परिमाणविशिष्टे सत्राकाशे नीलरूपप्रतीत्या तस्य चाक्षुषप्रत्यक्षविषयत्वमङ्गीक्रियतामिति। तन्न। गृहाभ्यन्तरस्थाकाशे नीलवर्णानुपलब्ध्या मरीचिकायां जलभ्रमवत्तत्रापि नीलवर्णप्रतीतेर्भ्रमरूपत्वात्। ग्रीष्मे मरुप्रदेशे सिकतादिपतितसूर्यकिरणेषु जलभ्रान्तिरेव मरीचिका। यथा तृष्णार्त्तमृगैर्निर्जलप्रदेशस्थसूर्यकिरणान् दूरतोऽवलोक्य सम्भ्रम्यते, किन्तु वस्तुतस्तत्र जलाभावाज्जलं नोपलभ्यते, तथा रूपाभावविशिष्टाकाशे भ्रान्त्या दूरतो नीलरूपे प्रतीतेऽपि वस्तुतस्तत्र तदभावात् गृहाभ्यन्तरस्थाकाशे तदनुपलब्धिरिति ज्ञेयम्। क्रियान्धकारकालिमवदाकाशप्रतीयमाननीलवर्णस्य चाक्षुषज्योतिषोऽभावस्वरूपत्वमाप्रमित्यपि वक्तुं पारयेत। तत्स्वीकारेणापीष्टसिद्धेः। अस्य शरीरविषयौ न स्तः। इन्द्रियं तु श्रावणमतिसूक्ष्मं कर्णशष्कुलीवर्त्ति। अस्यैकत्वेऽपि कर्णशष्कुलीघटमठजलाशयसकोपाधिभेदेन बहवो भेदाः सन्दृश्यन्ते। उपाधिशब्देनात्र स्थानमाश्रयो वा ज्ञेयः।

पु०—पितरः! तिष्ठतु तर्हि, साम्प्रतं कालस्वरूपनिर्णयेनानुगृह्णातु।

पि०—वत्स! 'विभुत्वे सत्यतीतादिव्यवहारासाधारणनिमित्तकारणत्वं कालत्व'मिति कालत्वलक्षणम्। आदिपदेनात्र भविष्यद्वर्त्तमानकालयोर्ग्रहणम्। तत्रातीतत्वं नाम वर्त्तमानध्वंसप्रतियोगित्वम्। वर्त्तमानः साम्प्रतं विद्यमानो यो ध्वंसो गतवर्षमासपक्षदिनमुहूर्त्तकलाविकलादिसमयानामभावस्तत्प्रतियोगिनस्तत्तत्समयास्तत्त्वं तत्तत्-

समयेषु वर्त्तत इति लक्षणसमन्वयः। वर्त्तमानत्वं नाम वर्त्तमानोपाधिसम्बन्धसम्बद्धत्वम्। वर्त्तमाना विद्यमाना ये उपाधयो घटपटादिरूपास्तेषां यः सम्बन्धः संयोगादिरूपस्तेन सम्बद्धस्तत्सम्बन्धविशिष्टो यः कालस्तत्त्वं यत्काले तिष्ठति स एव वर्त्तमानकाल इति लक्षणसमन्वयः। भविष्यत्त्वं च वर्त्तमानप्रागभावप्रतियोगित्वम्। वर्त्तमानो विद्यमानो यः प्रागभावः समागमिष्यमाणकलाविकलादिनपक्षमासवर्षादिरूपसमयानामभावरूपस्तत्प्रतियोगिनस्तत्तत्समयास्तत्त्वं तत्तत्समयेषु वर्त्तत इति लक्षणसमन्वयः। कालो हि जन्यवस्तुमात्रस्याधिकरणरूपकारणात्मना व्यवह्रियते। उत्पत्तिमद्रव्याधिकरणरूपेण ज्ञायमानकालस्योत्पत्तिमद्रव्यमात्रं प्रति वक्ष्यमाणदिशा निमित्तकारणत्वाङ्गीकारात्। सुवर्णात्कुण्डलादीनां, कपालद्वयाद् घटस्य, तन्तुभ्यश्च वस्त्रस्योत्पत्तिदर्शनेन यथा सुवर्णकपालतन्तूनां कुण्डलघटवस्त्राणि प्रति समवायिकारणत्वं, स्वर्णकारकुलालतन्तुवायानां च निमित्तकारणत्वं निर्णीयते, तथैकसमयेऽनेकदिवसेषु, शीघ्रं वा विलम्बमस्मिन्नेव दिने, रात्रौ वा फलत्य चिद्वस्तुन उत्पत्तौ ज्ञातायां सत्यां, किं वाद्य भविष्यति वा श्वो भविष्यति, अथवामुकफलपुष्पाद्युत्पत्तिः हेमन्तर्त्तावमुकर्त्तौ भविष्यतीत्याद्याकारेण यद्वस्तु यत्समये समुत्पद्यते तत्तत्समयस्य तत्तद्वस्तूत्पत्तिं प्रति निमित्तकारणत्वमित्यवधेयम्। घटपटाद्यनित्यपदार्थेष्वेव तादृशज्ञानं समुत्पद्यते न त्वाकाशकालदिगात्ममनोरूपनित्यपदार्थेषु। किञ्च 'अहं रामाज्ज्येष्ठः श्यामाच्च कनिष्ठ' इत्याकारकज्येष्ठकनिष्ठत्वव्यवहारं प्रत्यपि कालस्य निमित्तकारणत्वमङ्गीक्रियते। "कालः स्वभावो नियति"रिति श्वेताश्वतरोपनिषच्छ्रुत्या तस्य जन्यवस्तुमात्रं प्रति निमित्तकारणत्वाङ्गीकारात्। अस्य वायवीयपरमाणुवन्निरवयवत्वं, संयोगादिगुणवत्त्वेन द्रव्यत्व

निरवयवत्वेन गुणवत्त्वेन च वायवीयपरमाणुवन्नित्यद्रव्यत्वमाकाशवच्च व्यापकत्वं बोध्यम् ।

पु०—पितरः ! कालस्यैकत्वं मया नाङ्गीकर्त्तव्यम् । सार्द्धशतकलासमयस्य ( सेकेण्ड् ) सार्द्धशतविलिप्तिकासमयस्य ( मिनिट् ) क्षणमुहूर्त्तमासवर्षादीनां च व्यवहारोच्छेदापत्तेः ।

पि०—वत्स ! न चैवं वक्तुं शक्यते । घटिकायन्त्रस्थकण्टकस्पन्दनाविशिष्टकालस्यैव सार्द्धशतकलादिसमयाकारेण व्यवहारात् । तादृशव्यवहारस्तु तत्स्पन्दनविशिष्टकालात्मक एव । स्पन्दनविशिष्टघटिकायन्त्रस्थकण्टकेनैव सार्द्धशतकलासार्द्धशतविलिप्तिकादिसमयानां बोधात् । स्पन्दनविशेष एव कालात्मकद्रव्यविशेषणीभूतः सन् विशिष्टाकारेण नानाकारान् धारयति घटिकायन्त्रस्थकण्टकस्पन्दनेनैव सार्द्धशतकलादिसमयज्ञानोदयात् । आकाशस्यैकत्वेऽपि घटमठजलाद्युपाधिभेदेन घटाकाशमठाकाशजलाकाशाद्यात्मना नानात्वव्यवहारवत्कालस्यैकत्वेऽपि तथाविधकण्टकात्मकोपाधिमादाय सार्द्धशतकलादिसमयाद्यात्मना नानात्वव्यवहारः ।

पु०—पितः ! तथास्तु, किन्तु कालस्य ज्येष्ठत्वकनिष्ठत्वव्यवहारनिमित्तकारणत्वं मया नाङ्गीकर्त्तव्यम् । तत्र सूर्यगमनादीनां कारणत्वाङ्गीकारेणैव कार्यसिद्धेः ।

पि०—वत्स ! न चैवं वक्तुं युज्यते । "कालोऽनादिरनन्तश्च"इत्यादिनाशोच्छेदापत्तेः । 'इदानीन्तनो'इत्यादिव्यवहारदर्शनेनैतत्कालीनरामश्यामौ 'बहुकालीनौ'चेत्यादिव्यवहारदर्शनेन [illegible] रामश्यामबालकाभ्यां सह कालस्य कश्चिदेको विलक्षणसम्बन्धस्तिष्ठतीत्यवगतेश्च । यत्पदार्थस्य क्रिया

भवति तत्क्रियया सह तत्पदार्थस्य कश्चिदेकसम्बन्धोऽवश्यं स्थास्यत्येव। हस्तेन सह हस्तक्रियासम्बन्धपरिदर्शनात् सूर्यगतक्रिया सूर्य एव स्थास्यति, न तु रामश्यामादिव्यक्तौ। क्रियाक्रियावतोर्नित्यसम्बन्धसत्त्वात्। सम्बन्ध रामादौ रक्षितव्यश्चेर्त्तहि तत्र कश्चिदेकविधद्रव्यघटितपरम्परसम्बन्ध कल्पनीय। तादृशद्रव्य न कालातिरिक्त भवेत्। सम्बन्धश्चात्र 'स्वाश्रय-सपमसयोगिसंयोगात्मक एव। स्वपदेनात्र तपनगतिस्तदाश्रयस्तपनस्तत् सयोगिद्रव्य कालस्तत्संयोगो रामादौ तिष्ठतीति ज्येष्ठत्वादिक प्रति कालस्ये-दृशपरम्परासम्बन्धेन निमित्तकारणत्वमिति तल्लक्षणसमन्वय। किञ्च प्रोक्त-परम्परासम्बन्धेन ज्येष्ठत्वकनिष्ठत्वादिक प्रति कालस्यैव निमित्तकारणत्वम-स्त्येव। तस्य सर्वमूर्त्तद्रव्यसयोगित्वेन व्यापकत्वेन वा सर्वमूर्त्तद्रव्यनिष्ठकाल-सयोगस्य सूर्ये रामश्यामादिसकलद्रव्येषु चोपलब्धे। यद्यत्र त्वया वक्तव्य पूर्वोक्ताकाशस्य विभुत्वेन तस्यैव तथाविधद्रव्यस्वरूपत्वमङ्गीकृत्य तदतिरिक्त कालपदार्थो मया नाङ्गीकर्त्तव्य इति। अत्र मम —विशेष-कारणान्तरभावेन तुल्ययुक्त्या च विभूतामसत्त्वात्सर्वजीवात्मनामपि तथाविधद्रव्यत्वस्वरूपत्वं वक्तु पारये। तव तथास्वीकृतौ गौरवात्तत्-पदार्थातिरिक्तकालपदार्थस्वीकरण युक्तमेवेति।

पु०—पितर ! भवतु तर्हि, साम्प्रत दिक्स्वरूपनिरूपणेनानुगृह्णा।

पि०—वत्स ! 'विभुत्वे सति प्राच्यादिव्यवहारासाधारणनिमित्त कारणत्व, कालिकातिरिक्तदूरत्वान्तिकटत्वासाधारणनिमित्तकारणत्व वा दिक्त्व मिति दिग्लक्षणम्। सा चैकैव। आकाशस्यैकत्वेऽपि घटमठा-द्युपाधिभेदेन घटाकाशादिव्यवहारवदस्या एकत्वेऽपि सूर्योदयास्ताद्यात्मको-पाधिभेदमादाय पूर्वदक्षिणाद्यात्मना नानात्वव्यवहार। सूर्योदयास्तौ व्यक्तेर्वामदक्षिणपार्श्वादय एव वास्या उपाधयो भेदकधर्मा वा। प्रतिदिनं

प्रातर्यस्यां दिशि सूर्य उदेति सा पूर्वा दिक्, श्रावणादिमासषट्केषु मध्याह्नकाले आकाशस्य यद्देशः सूर्यस्थितिस्थानं तन्निकटवर्त्तिप्रदेश एव दक्षिणा दिक्, अस्ताचलनिकटवर्त्तिप्रदेशः पश्चिमादिक्, सुमेरुसन्निहित-दिगेवोत्तरादिक्। किम्वा सूर्याभिमुखदण्डायमानपुरुषस्य सम्मुखभागः पूर्वा दिक्, दक्षिणहस्तभागो दक्षिणा दिक्, वामहस्तभाग उत्तरा दिक्, पृष्ठभागश्च पश्चिमा दिगिति। तत्राप्युदयगिरिसन्निहिता सुमेरुव्यवहिता च दिगाग्नेयी, सुमेरुव्यवहितास्ताचलसन्निहिता दिङ् नैर्ऋती, अस्ताचलसुमेरू-भयसन्निहिता दिग् वायवी, सुमेरूदयाचलोभयसन्निहिता च दिगैशानीत्यपि निगदन्ति। द्वितीयलक्षणविवरणं यथा दिशस्तद्वस्तुसंयोगस्य वोभयोरेव दूरत्वनिकटत्वरूपगुणद्वयं प्रत्यसमवायिकारणत्वेन दिशमन्तरा दूरत्वनिकट-त्वोत्पत्तिर्न सम्भवतीति नियमः। द्रव्यगुणकर्मात्मकभावकार्योत्पत्तिं प्रति तत्त-दवयवसंयोगादिगुणानामसमवायिकारणत्वाङ्गीकृतिवद्दिक्संयोगस्यापि दूरत्व-निकटत्वे प्रत्यसमवायिकारणत्वाङ्गीकारात्। स्वयमपि दिक् तत्तद्देशसंयुक्ता सती दूरतातारतम्यमादायाल्पाधिकभावेनैकवस्तुनोऽपरवस्तुना सह संयोग-मुत्पादयत्येव। अधिकदूरस्थवस्तुनि बहुपदार्थानामल्पदूरस्थवस्तुनि चाल्पपदार्थानां संयोगमुत्पादयतीत्यभिप्रायः। स्वस्मिन् स्वसंयोग इव यत्र समानसंयोगो घटते तत्र न दूरं नापि निकटं वा किमप्यस्ति। तत्राम्यान्यवस्तुसंयोगाभावात्। अस्या वायवीयपरमाणुवद् द्रव्यानाश्रितत्वेन गुणवत्त्वेन च नित्यद्रव्यत्वं, सत्तावदेकत्वं सर्वमूर्त्तद्रव्यसंयोगित्वेनाकाशादि-वद्व्यापकत्वञ्चावधेयम्।

पु०—पितरः! भवतु तर्हि; साम्प्रतं कृपयात्मस्वरूपनिर्णयेन कृतार्थी-कर्त्तव्यः।

पि०—वत्स! सर्वपदार्थापेक्षयात्मतत्त्वस्यातिगहनतया सावधानेन

श्रोतव्य विवेच्य च सत्। तथाहि 'नित्यत्वे सति समवायसम्बन्धेन ज्ञानाद्यधिकरणत्वमात्मत्व'मित्यात्मलक्षणम्। स चात्मा द्विविधः। जीवपरमभेदात्। तत्रात्मनि जीवत्वं नाम समवायेन जन्यज्ञानाद्यधिकरणत्वं, परमत्वं च समवायेन नित्यज्ञानाद्यधिकरणत्वे सति जगज्जन्मादिकारणत्वम्। तथाविधात्मनोर्मध्येऽत्र प्रथमं जीवात्मस्वरूपं प्रतिपाद्य तत्पश्चात्परमात्मस्वरूपं निरूपयिष्यामः। तथाह्यात्मसिद्धिः ज्ञानेनैव भवति। सर्वविधज्ञानेषु साक्षात्कारस्यैव प्राधान्यम्। साक्षात्कारात्मकस्पष्टज्ञानस्यैवाद्वितीयत्वात्। तत्साक्षात्कारस्य विषयभेदेन नानात्वेऽप्यात्मास्तित्वसिद्धये सकलविधसाक्षात्काराणामपि युगपद्ग्रहणात्प्रथमं रूपादिसाक्षात्कारेष्वेकैकसाक्षात्कारविषयकविचारस्यौचित्येऽपि प्राग्रूपादिवस्तुस्वरूपबोधनैरपेक्ष्येण तत्तद्वस्तुविषयकसाक्षात्कारासम्भवादत्र तत्तद्वस्तुस्वरूपप्रदर्शनमपि क्रियते। यथा—चक्षुर्मात्रानुभूयमानगुणो रूपं, रसनेन्द्रियमात्रग्राह्यगुणो रसः, घ्राणेन्द्रियमात्रग्राह्यगुणो गन्धः, त्वगिन्द्रियमात्रग्राह्यगुणः स्पर्शः, श्रवणेन्द्रियमात्रग्राह्यगुणः शब्दश्चेति। रूपलक्षणगतमात्रपदानुपादाने संख्यादावतिव्याप्तिः। तासां त्वगिन्द्रियग्राह्यत्वसत्त्वेऽपि चक्षुरिन्द्रियग्राह्यत्वस्यापि सत्त्वात्। मात्रपदोपादाने तु तद्व्यतिरव्यावर्तकत्वसूचनान्नातिव्याप्तिः। तद्गतगुणपदानुपादाने रूपत्वजातावतिव्याप्तिः। 'यो हि गुणो व्यक्तिर्वा येनैवेन्द्रियेण गृह्यते, तद्गतजात्यादिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते' इति नियमात्। तदुपादाने जातौ गुणत्वाभावान्नातिव्याप्तिः। न च सूर्यादिप्रभाभित्तिसंयोगे चक्षुर्मात्रगृहीतत्वसत्त्वेऽपि रूपलक्षणातिव्याप्तिः शङ्कनीया। रूपलक्षणे चक्षुर्मात्रग्राह्यजातिमत्त्वमिति वक्तव्यत्वात्। सूर्यप्रभाभित्तिसंयोगात्मकगुणे चक्षुर्मात्रग्राह्यरूपत्वजातेरसत्त्वान्नातिव्याप्तिः। रसत्वगन्धत्वस्पर्शत्वशब्दत्वेष्वतिव्याप्तिवारणाय

रसादिलक्षणेषु गुणपदोपादानं, संयोगादावतिव्याप्तिवारणाय च साक्षात्पदो-पादानम् । रूपादय एवेन्द्रियार्था इन्द्रियविषया वा, चक्षुरादयश्च विषयिणः । तथा सति रूपादिसाक्षात्कारः किञ्चिद्द्रव्यनिष्ठो भवितुमर्हति, तस्य गुण-पदार्थत्वात्तादृशसाक्षात्कारात्मकगुणो यद्द्रव्ये तिष्ठति तद्द्रव्यमेवात्मे'त्यनुमानेन रूपादिसाक्षात्कारस्यात्मास्तित्वसाधकत्ववत्, चक्षुरादीन्द्रियाण्यात्मत्व-साधकानि भवितुमर्हन्ति, तेषामपि ज्ञानसाधकत्वात्, तत्तदिन्द्रियात्मक-करणानि यस्मिन्नेव कर्त्तरि तिष्ठन्ति तत्कर्त्तैवात्मेत्यनुमानेनेन्द्रियाणा-मप्यात्मत्वसाधकत्वमवधेयम् ।

पु०—पितः ! प्रोक्तानुमानद्वयस्यात्मास्तित्वसाधकत्वं मया नाङ्गी-कर्त्तव्यम् । साक्षात्कारात्मकगुणाश्रयद्रव्याकारेण चक्षुरादीन्द्रियाश्रय-कर्त्तृरूपेण चात्मवस्तुसिद्धिस्वीकारापेक्षयेन्द्रियाणां स्थूलशरीरस्य वा तादृशवस्तुस्वरूपत्वाङ्गीकारेणैव कार्यसिद्धेः ।

पि०—वत्स ! न चैवं वक्तुं शक्यते । अन्येन्द्रियाणां स्थूलशरीरस्य वा पृथिव्यादिद्रव्योत्पन्नत्वेन पार्थिवादिपरमाणूनामेवेन्द्रियादिपदार्थानां चरमकारणतया स्थूलपृथिव्यादौ रूपादिगुणसाक्षात्कारेण तत्तत्परमाणुषु तादृशगुणाङ्गीकारवदिन्द्रियदेहेषु ज्ञानास्तित्वाङ्गीकारे तत्कारणीभूतपरमाणु-ष्वपि तदस्तित्वस्वीकारापत्तेः । किञ्च बाल्यानुभूतपदार्थानां यौवने, यौवनानुभूतपदार्थानां च वार्द्धक्ये स्मरणानुपपत्तिः स्यात् । बाल्यादि-शरीरोपचयापचयादिना पूर्वपूर्वशरीरविनाशेन शरीरान्तरोत्पत्तिदर्शनात् । अतो ज्ञानाधिकरणत्वमात्मन एव नेन्द्रियाणां स्थूलशरीराणां वा ; परमाणुषु ज्ञानाभावाद्यौवनाद्यवस्थासु बाल्याद्यवस्थानुभूयमानवस्त्वनुभवित्रभावेऽपि तदानीं तत्तत्पूर्वानुभूतवस्तुस्मृतेः ।

पु०—पितर ! शरीरस्यैव पूर्वानुभूतवस्तुस्मरणं भवतीति मया वक्तव्यम् । अवयववृद्धिह्रासादिजन्यद्वितीयादिशरीरे बाल्यानुभूतवस्तूत्पन्न संस्कारविशेषसम्भूतसंस्कारान्तरबलेन तत्तत्कालानुभूतवस्तुस्मृतेः ।

पि०—वत्स ! न चैव वक्तुं शक्यते । त्वदुक्तदिशानन्तसंस्कार कल्पनाया गौरवात् । उत्पत्तिकालीनबालकस्य तदानीं स्तन्यपानोपकारित्व ज्ञानाभावेनापि स्तन्यपानप्रवृत्त्यसम्भवाच्च । परिदृश्यते खलु लोके बालक स्योत्पत्त्यनन्तरमेव पूर्वजन्मस्तन्यपानोपकारित्वज्ञानसद्भावमादाय तत्पान हृष्टसाधनताज्ञानस्मरणानन्तरं तत्र प्रवृत्तिरुत्पद्यत इति । चेतनमन्तरेण कस्यापि जडपदार्थस्य तादृशानुभवो नैव सम्भवति । अनुभवमन्तरेण स्मरणानुपपत्तिरपि प्रत्यक्षसिद्धैव । न च चेतनपदार्थसुखमज्ञानचेष्टादि-धर्मसद्भावो जडशरीरे कथमप्यङ्गीकुर्यात् । मृतशरीरे तदनुपलब्धेः । यच्च त्वया वक्तव्यमास्मन पूर्वजन्मस्तन्यपानस्मरणाङ्गीकृतिवत्पूर्वजन्मानुभूत-वस्तुविषयकस्मरणमप्यङ्गीक्रियतामिति । तन्न । स्तन्यपानमन्तरा जीवित-स्यासम्भवेन तादृशस्मरणोद्बोधकरूपेण जीवनादृष्टकल्पनात् । न च तदति-रिक्तवस्तुस्मरणं सम्भवति । तत्र कस्यापि वस्तुन उद्बोधकस्याभावात् । एतेन जीवात्मनोऽनादित्वं नित्यत्वं चावगम्यते ।

पु०—पितर ! चक्षुरादीन्द्रियाणां ज्ञानादिकं प्रति करणत्वाङ्गी कृतिवद् घटादिकार्यनिष्पत्तौ कर्तृत्वाङ्गीकारे का हानिः ?

पि०—वत्स ! न चेन्द्रियाणां तत्तत्कार्यनिष्पत्तौ कर्तृत्वं सम्भवति । प्राग् यद्वस्तु येनैवानुभूतं तद्वस्तुस्मरणं तस्यैव भवतीत्यनुभवसिद्धत्वेन प्राक् सति तत्तद्वस्त्वनुभवितृचक्षुरादीन्द्रियविनाशे तत्तदिन्द्रियानुभूततत्तद्विषयजन्य स्मरणानुपपत्तेः । न चैषामिन्द्रियाणां ज्ञानादिकं प्रति करणत्वं घटादि

कार्यं प्रति कारणत्वं वा किमपि न सिध्येत्। अन्यानुभूतपदार्थानामन्येन-स्मर्तुमशक्यत्वात्।

पु०—पितरः! अनित्यचक्षुरादीन्द्रियाणां मास्तु चेतनादिधर्मवत्त्वं, किन्तु मनसस्तथाविधधर्मवत्त्वं मयाङ्गीकर्तव्यम्। अन्तरिन्द्रियस्य तस्य नित्यत्वात्।

पि०—वत्स! मनसश्चेतनादिधर्मविशिष्टत्वं नाङ्गीकर्तव्यम्। प्रत्यक्षमात्रं प्रति महत्त्वस्यापि कारणत्वेनातिसूक्ष्ममनोगतचेतनादिधर्माणामप्रत्यक्षत्वापत्तेः। कार्यकारणरूपेणैकाधिकरणवृत्त्यनुभवस्मरणयोरप्रत्यक्षीभूतमनोगतत्वेन सुखदुःखादीनां चाननुभवापत्तेश्च। अनुभवमन्तरेण स्मरणानुपपत्त्या 'अहं सुखी' 'अहं दुःखी' चेत्याद्याकारकज्ञानानां पूर्वानुभूततत्तद्वस्तुस्मरणस्य चाननुभूयमानत्वभिया तस्य चेतनादिधर्मविशिष्टत्वं नैवाभ्युपेयम्। आत्मनो न केवलं ज्ञानस्यैव कारणत्वं प्राणादिवायुक्रियादीनामपि। यस्य प्रयत्नेन श्वासप्रश्वासादिरूपा प्राणवायुक्रिया मलस्याधोगमरूपापानवायुक्रियाहारादिसमीकरणरूपा समानवायुक्रिया च घटते सोऽप्यात्मा। न चैतावता वायोः स्वाभाविकगतिर्व्याहन्येत। ईदृशगतिविपर्ययस्याप्यात्मप्रयत्नाधीनत्वात्। अस्मत्प्रत्यक्षागोचरेऽप्यात्मप्रयत्ने तदस्तित्वं नापलपितव्यम्। प्रयत्नमन्तरेण वायोरीदृशस्वाभाविकगतिविपर्ययासम्भवात्। यथा स्वाभाविकवक्रगतिशीलस्यापि वायोर्भस्त्रनाडिसम्बाहनादिनोर्द्ध्वं गतिर्घटते, तथा प्राणादिवायुस्थलेऽप्यात्मप्रयत्नसापेक्षेणैव तद्गतिविपर्ययो घटते। यत्प्रयत्नेन प्राणादिवायुक्रियाविपर्ययो घटते तत्प्रयत्नविशिष्ट एवात्मा। किञ्च कर्मणां नानात्वेन कुत्रचित्स्थले किमपि कर्म प्रति संयोगविशेषस्यैव कारणता परिदृश्यते। वृक्षशाखादिकम्पनं प्रति वायोः संयोगविशेषवत्। अनेकत्रापि संयोगाभावे समानसंयोगे वा विद्यमानेऽपि कदाचित्कर्मोत्पद्यते कदाचिद्वा नोत्पद्यते।

तथाहि कदाचित्कुत्रापि स्थले कियत्क्षणमुषित्वा तत स्थानान्तरं प्रति मन्द-मन्दं गतवति कस्मिंश्चित्पुरुषे तदानीं कियद्दूरेऽसौ मदुपवेशनस्थाने ममामुकवस्तु त्यक्त्वा समागतवानस्मीति स्मृत्वा पुनस्तत्स्थानाभिमुखेन द्रुत प्रधावति तस्मिंस्तस्य तादृशद्रुतगमनं प्रत्यात्मप्रयत्नस्यैव कारणता निर्णेतव्या। किञ्च संयोगविशेषनैरपेक्ष्येणापि चक्षुरुन्मेषनिमेषादिकर्माणि यत्प्रयत्नसाध्यानि भवन्ति तत्प्रयत्नविशिष्टपदार्थ एवात्मा। अन्यच्च यत्पदार्थसत्त्वे क्षत स्थानादिकं पूर्यते तत्पदार्थोऽप्यात्मेति वक्तुं पारयेत्। निर्जीवपदार्थस्य तदसम्भवात्। अपरञ्च यद्वस्तुप्रेरणया मनोऽपीच्छानुसारेण विषयविशेषे प्रविशति सोऽप्यात्मा। मनोनिवेशस्याप्यात्मसिद्ध्यनुमापकत्वात्। किं वा प्राक छुधार्थम्कफलाशिपुरुषस्य कदाचित्सति तथाविधफललाभलोभाज्जिह्वातो जलं स्रवतीति दृष्टचरम्। तत्र तल्लोभं प्रति तत्फलगतास्वादरसज्ञानस्यैव कारणता निर्णेतव्या। तत्र तादृशज्ञानं न प्रत्यक्षमूलकमपि त्वनुमानमूलकमेव। तादृशज्ञानस्य प्रत्यक्षमूलकत्वाङ्गीकारे तत्फलप्राप्तिमात्रेणैव तत् फलगतस्वादुत्वानुग्रहणापत्तेः। अनुमानमात्रस्य व्याप्तिज्ञानसापेक्षत्वेनात्र-परम्परयावगम्यते यत् ज्ञानेच्छाधारभूत शरीरेन्द्रियातिरिक्त कश्चिदतिरिक्त पदार्थोऽस्ति यस्त्वात्माख्ययाभिहितो भवतीति। एतेनेन्द्रियविकारस्याप्यात्मानुमापकत्वमिति प्रतीयते। किञ्च खलु स्वेच्छाप्रयत्नविशिष्टोऽप्यात्मपदार्थ इत्यादि वक्तुं पारयेत्। तत्तद्गुणानामात्मन्येवोपलब्धेः। नास्य द्रव्यत्वमपलपितव्यम्। ज्ञानादिगुणवत्त्वात्। अस्य नित्यत्वमप्यङ्गीकार्यम्। आकाशवन्निरवयवत्वे सत्यसमवेतपदार्थत्वात्।

पु०—पितः! तथापि प्रथममात्मपदार्थो मया नाङ्गीकर्त्तव्यः। तदस्तित्वे प्रत्यक्षप्रमाणाभावात्।

पि०—वत्स! न चैवं वक्तुं शक्यते। तत्र चक्षुरादिबहिरिन्द्रिय-

प्रत्यक्षप्रमाणाभावेऽपि त्रिकालदर्शिभिः सकलमहर्षिभिर्वेदस्यागमानुमानागमात्मकप्रमाणाभ्यां सद्भिस्तत्त्वसाधनात्। अनुमानखण्डेऽनुमानस्वरूपस्य विस्तरेण निरूपयिष्यमाणत्वेऽप्यत्र बोधसौकर्यायैव संक्षेपतस्तत्स्वरूपमभिधाय ततः पूर्वपक्षवाद्युक्तात्मत्वसाधकानुमानखण्डनं, तत्पश्चात्तु स्वमतीयानुमानागमप्रमाणद्वयसाधनं च करिष्यामः। तत्रानुमानं वैशेषिकनये पूर्ववत्-सामान्यतोदृष्टभेदेन द्विविधं गौतमनये च पूर्ववच्छेषवत्सामान्यतोदृष्टभेदेन त्रिविधम्। दार्शनिकनये पक्षसपक्षविपक्षसाध्यसाधनव्याप्तिपक्षधर्मतादिरूपानुमानसाधकपारिभाषिकशब्दाः कतिचन व्यवहृता भवन्ति। तेषु यत्र साध्यसन्देहस्तिष्ठति स पक्षो यत्र साध्यनिश्चयोऽस्ति स सपक्षो, यत्र साध्यः कदाचिदपि न तिष्ठेत् स विपक्षः, पक्षे यमनुमिनुयात्स साध्यो, यद्वस्तुसन्दर्शनेन पक्षे साध्यमनुमिनुयात्तत्साधनं हेतुर्वा, साध्यहेत्वोरेकत्रावस्थानरूपसम्बन्धविशेषो व्याप्तिर्व्याप्त्याश्रयधूमादिहेतुर्वा पर्वतादिपक्षवृत्तित्वं च पक्षधर्मता। तत्र प्रोक्तहेतुरपि द्विविधः। सदसद्धेतुभेदात्। तत्र साध्यस्य समदेशवृत्तिर्न्यूनदेशवृत्तिर्वा हेतुः सद्धेतुः, साध्याधिकदेशवृत्तिः, साध्याधिकरणावृत्तिः साध्याभावाधिकरणवृत्तिर्वा हेतुरसद्धेतुः। तत्र सद्धेतूनामेवानुमित्युपकारकत्वमसद्धेतूनां चानुमितिप्रतिबन्धकत्वमवधेयम्। असद्धेतवो हेत्वाभासाख्ययाप्यभिहिता भवन्ति। परामर्शाख्यज्ञानविशेष एवानुमितिः।

'परामर्शो नाम वह्न्यादिरूपसाध्यव्याप्यधूमादिहेतुर्वा पर्वतादिपक्षवृत्तित्वरूपज्ञानविशेषः। स च 'वह्निव्याप्यधूमवानयं पर्वत' इत्याकारज्ञानात्मकः। तज्ज्ञानादेव 'पर्वतो वह्निमान् धूमा'दित्याकारकज्ञानात्मकानुमित्युत्पत्तेः।

पूर्वोक्तं पूर्ववदनुमानं यथा-'यत्र स्थले साध्यहेतुगतव्याप्तिप्रत्यक्षद्वारा साध्यस्य प्रत्यक्षयोग्यतासत्त्वेऽपि केवलेन्द्रियसन्निकर्षाभावेन तत्प्रत्यक्षं न भवति, तत्र पूर्ववदनुमानम्। यथा 'वह्निमान् धूमा'दित्यादौ महानसादिसपक्षे वह्नि-

व्याप्याकारेण वह्न्यपेक्षयाल्पदेशवृत्तित्वाकारेण वा धूमस्य प्रत्यक्षत्वेऽपि कदाचित्पर्वतादिगतधूमदर्शनानन्तरं प्रत्यक्षयोग्यस्यापि वह्नेस्तदानीं प्रत्यक्षं न भवति। तस्य केवलचक्षुर्व्यवहितप्रदेशावस्थितत्वेन तेन सह चक्षुःसन्निकर्षाभावात्। 'यत्र स्थले प्रागनुमानात्साध्यप्रसिद्धिः कथमपि नासीत् केवलमनुमानबलेनैव पक्षे साध्योऽनुमीयते, तत्र तथाविधानुमानमेव शेषवदनुमानम्। इदमेवानुमानम् 'अवीतानुमानं परिशेषानुमानं चे'त्यपि वदन्ति। यथा—'पृथिवी पृथिवीतरेभ्यो भिद्यते, गन्धवत्त्वा'दित्यत्र पृथिवी पक्षः, पृथिवीतरभेदः साध्यः, गन्धवत्त्वं च हेतुः। अत्र पृथिवीतरजलादिवस्तुषु गन्धस्य गुणत्वाभावप्रसक्तिसत्त्वेऽपि तस्य प्रत्यक्षतो बाधितत्वेन, गुणादिपदार्थषट्केषु च गन्धसत्त्वस्यासम्भवतयाप्यस्मिन् कस्मिंश्चित्पृथिवीतरसकलपदार्थभिन्नद्रव्येऽवश्यं गन्धगुणमनुमिनुयात्। किन्तु तादृशद्रव्य प्रागनुमानात् क्वचिदपि स्थले निश्चितं नासीत्केवलमनुमानबलेनैव तादृशपृथिव्यात्मकद्रव्यलाभात्तदनुमानमेव शेषवदनुमानम्। यत्र स्थले प्रागनुमानात्साध्यतावच्छेदकप्रकारेण साध्यप्रसिद्ध्यभावेऽपि किमप्येकसामान्यधर्मपुरस्कारेणान्यत्र येनानुमानेन तत्प्रसिद्धिं साधयेत्तदनुमानमेव सामान्यतोदृष्टानुमानम्। यथा रूपादिप्रत्यक्षे 'इन्द्रियाणि करणानि भवितुमर्हन्ति, क्रियात्वा'दित्यत्रेन्द्रियाणि करणानीत्यनुमानं भवति। अत्रेन्द्रियात्मकसाध्ये इन्द्रियत्वरूपधर्मस्य विशेषणतयेन्द्रियत्वमेव साध्यतावच्छेदकधर्मः। यद्यप्यत्रानुमानात् प्रागिन्द्रियत्वप्रकारेणेन्द्रियनिश्चयः कथमपि न स्यादर्थादिन्द्रियाकारेण कस्यापि वस्तुनो ज्ञानं प्रसिद्धिर्वा न सम्भवति, तथापि सामान्यतः सकलकरणनिष्ठकरणत्वधर्मप्रकारेण छेदनादिरूपकतिपयक्रियासु कुठारादिरूपकरणप्रसिद्धेः 'या याः क्रियाः कार्याणि वा ताः सर्वाः करणसाध्या भवन्त्येव। कुठारादिना छेदनक्रियासिद्धिवत्पद्भ्यामश्वादिना वा गमनक्रियासिद्धिवद्-

स्तादिना च भोजनक्रियासिद्धिवद्वास्यादिनिश्चयेन रूपदर्शनादिक्रियास्वपि करणसिद्धयेऽन्यान्यद्रव्याणां करणत्वासम्भवादिन्द्रियाणामेव तत्र करणत्वमित्यनुमानं भवतीति तत्र सामान्यतोदृष्टानुमानमवधेयम्। अत्र पूर्वपक्षावादिनो निगदन्ति यथा—आत्मानुमानस्थले पूर्ववदनुमानं नैव सम्भवति रामश्यामादिशरीरेण सह सत्यपि चक्षुःसन्निकर्षे तत्रात्मैव रामः श्यामो वेत्याकारकप्रत्यक्षाभावेनात्मनः प्रत्यक्षयोग्यत्वासम्भवात्। नापि तत्र शेषवत्सामान्यतोदृष्टानुमानद्वयमपि सम्भवति। 'ज्ञानं पृथिव्याद्यष्टद्रव्यगुणो भवितुं नार्हति, बाह्येन्द्रियप्रत्यक्षाविषयत्वे सति मानसप्रत्यक्षविषयत्वा'दित्याकारकशेषवदनुमानेन परिशेषे स्थिरीक्रियते पृथिव्यादिनिष्ठरूपादिगुणानां बहिरिन्द्रियप्रत्यक्षाविषयत्वे सति मानसप्रत्यक्षत्वं न सम्भवतीति प्रथमं निश्चित्य पश्चाद्बाह्यप्रत्यक्षाविषयत्वमानसप्रत्यक्षविषयत्वाभ्यां ज्ञानं न पृथिव्यादिगुण इति सिध्यति। किञ्चैकत्र स्थले साध्यहेत्वोरपरिगृहीतत्वम् स्थलपरत्र तु साध्याभावहेत्वभावयोः परिगृहीतत्वमस्त्येतादृशप्रकरणपरिशेषे यत्र प्रकृतानुमानं भवति तत्र तादृशानुमानमेव शेषवदनुमानम्। अनेनैवानुमानेन पृथिव्याद्यष्टद्रव्यातिरिक्तगुणाकारेण स्थिरीकृतेऽपि ज्ञाने तत्र तत्र' स्याकारकज्ञाने विषयस्वरूपनिश्चयाभावात् 'तत्र तत्रे'तिकथनेन न किमपि विषयस्वरूपं सिद्ध्येत्। 'ज्ञानं किमपि द्रव्यनिष्ठं भवितुमर्हति, गुणत्वा'दित्याकारकसामान्यतोदृष्टानुमानस्थलेऽप्यात्मा पक्षः, आत्मवृत्तित्वज्ञानं साध्यो गुणवत्त्वं च हेतुः। अत्र ज्ञानात्मकसाध्येन सह गुणवत्त्वरूपहेतोर्व्याप्त्याख्यसम्बन्धस्यैकाधिकरणवृत्तित्वरूपसम्बन्धस्य वा कुत्रापि स्थलेऽदृष्टत्वेन ज्ञानात्मकगुणस्य यत्र कुत्रापि द्रव्ये विद्यमानत्वं सिद्ध्यत्येव। एतावताष्टद्रव्यातिरिक्तात्मवस्तुसिद्ध्यभावात्पूर्वोक्तत्रिविधानुमानैर्नात्मवस्तुसिद्धिरिति पूर्वपक्षवादिनामभिप्रायः। वयमत्र ब्रूमः। बहिरिन्द्रियप्रत्यक्षप्रमाणा-

भाव माशङ्क्यात्मपदार्थापलपनमयुक्तम् । तस्य 'अहं सुखी' 'अहं दुःखी' चेत्याकारकमानसप्रत्यक्षयोग्यत्वदर्शनात् । 'अहं वर्त्ते' 'अहं गच्छामि' चेत्यादिव्यवहारस्थलेऽप्यहमित्याकारकात्मच्छन्द प्रयोगस्याप्यात्मास्तित्वानुमापकत्वाच्च । किञ्चोपनिषदाद्यात्मतत्त्वप्रतिपादकशास्त्रेभ्य आत्मतत्त्वमवगम्य पश्चादनुमानेन शास्त्रोक्ततत्त्वं दृढीकृत्य तत्पश्चान्निरन्तरध्यानेनात्मसाक्षात्कारे जाते देहादावात्मत्वभ्रमनिरसनेन मुक्तिर्भवतीत्यनुमानप्रधानन्यायवैशेषिकदर्शनयोर्मोक्षशास्त्रत्वमङ्गीकृतम् । "आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति बृहदारण्यकोपनिषद्द्वितीयाध्यायचतुर्थब्राह्मणपञ्चमानुवाकात्मकश्रुत्या "श्रोतव्य श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि । मत्वा च सततं ध्येय एते दर्शनहेतव"इति स्मृत्या च तत्साधने श्रवणाद्यङ्गीकारात् । मुमुक्षुपुरुष आत्मसाक्षात्कारार्थं विविधवेदवाक्येभ्य आत्मतत्त्वोपदेशान् गृह्णन् तान् विविधोपयुक्तहेतुभिश्चानुमाय परिशेषे तदात्मतत्त्व निरन्तरं ध्यायेदिति श्रुतिस्मृत्युभयाभिप्राय । श्रुतिपदादत्रोपलक्षणविधयात्मतत्त्वपूर्णगीतापुराणादिस्मृतिवाक्य महर्षिगुरुवाक्यं चापि बोद्धव्यम् ।

तथा च युपनिषदात्मकश्रुतिवाक्यादिभ्य आत्मतत्त्वोपदेशग्रहण विविधनिर्दोषहेतुकानुमान, परिशेषे निरन्तरमात्मतत्त्वचिन्तन चेत्येतत्त्रितयस्याप्यात्मसाक्षात्कारहेतुत्वमवधेयम् । अस्मन्मते सामान्यतोदृष्टशेषवदनुमानाभ्यामेव पृथिव्याद्यष्टद्रव्यातिरिक्तात्मद्रव्यसिद्धि । तत्र सामान्यतोदृष्टानुमानं यथा—प्रथमं ज्ञानस्य पृथिव्याद्यष्टद्रव्यगुणभिन्नत्व निश्चित्य पश्चात् 'तदेव ज्ञान कस्मिंश्चिदपि द्रव्ये स्थातुमर्हति, गुणत्वाद्रूपादिव'दित्याकारकसामान्यतोदृष्टानुमानेन तस्य पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यनिष्ठत्व साधयेत् । शेषवदनुमानं च—प्रथमं ज्ञानस्य कुत्रचिद्द्रव्येऽस्तित्वनिश्चयानन्तरम् 'तत्र, एतत्रे'ति निषेधेनैव भवति । 'अन्यस्य कस्यचिद् द्रव्यस्यैव गुणो ज्ञान'-

मित्याकारकनिश्चय एव शेषवदनुमानस्य फलम्। सामान्यतोदृष्टानुमाने-नाप्यात्मास्तित्व-सिद्धिर्भवतीति प्रदर्शनार्थमेवास्मच्छब्दद्वारात्मत्वसिद्धि प्राक् प्रदर्शिता। वैशेषिकै सामान्यतोदृष्टानुमानाच्छेषवदनुमानस्य पृथक्त्वं नाङ्गीक्रियते। तस्य सामान्यतोदृष्टानुमानसहायकत्वमात्राङ्गीकारेणैव कार्यसिद्धः। आत्मत्वसिद्धौ श्रुतिस्मृत्योरपि कारणत्वं परिदृश्यते, तथा-ऽत्र श्रुतिः "योऽपहतपाप्मा स आत्मे"ति। अपहतपाप्मा निष्पाप इत्यर्थः। भगवद्गीताद्वितीयाध्यायद्वाविंशश्लोकात्मिका स्मृतिरपि "अच्छेद्योऽयमदाह्योऽय"मित्यादि। अच्छेद्य सुतीक्ष्णधारशस्त्रेणापि छेदनानर्हः, अदाह्योऽग्निनापि दाहानर्हः, अयं जीवात्मा चेत्यर्थः।

पु०—पितः! आत्मपदार्थसिद्धौ भवदुक्तदिशानुमानप्रमाणस्य निरर्थकत्वं मयाऽङ्गीकर्तव्यम्। 'अयं रामः' 'अयं श्यामश्चे'त्याकारक-ज्ञानेनैवात्मपदार्थसाक्षात्काराङ्गीकारात्।

पि०—वत्स! न चैवं वक्तुं युज्यते। त्वदुक्तदिशा तादृशसाक्षात्-काराङ्गीकारेऽपि "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका" इतिन्यायेन प्रत्यक्षप्रमाणेनाप्यवगतविषयस्यानुमानेन पुनस्तद्दृढीकरण-विधानस्य प्राचीनसम्मतत्वात्।

पु०—पितः! तथापि परिदृश्यमानशरीरस्यैवात्मत्वं मयाङ्गी-कर्तव्यम्। भवदुक्तदिशा व्यापकस्यात्मनो गमनादिक्रियाऽसम्भवात् 'अहं यामि' 'स धावति' 'त्वं रोदिषि' चेत्यादिक्रियाणामस्मदादिशरीरेष्वेव परिदृश्यमानत्वात्।

पि०—वत्स! न चैवं वक्तुं युज्यते। मृतपितरं क्रोडीकृत्य स्त्रीप्रभृतीनाम् 'अयि जीवितनाथ!' वा 'अरे वत्स! मां विहाय क्व गतोऽसी'त्युक्त्वा एवंविधशिरस्ताडनपूर्वकक्रन्दनाद्याचरणदर्शनात् तत्र

तत्तच्छरीरस्य विद्यमानत्वेन क्रन्दनादिकर्माचरणानौचित्यात्। तत्क्रन्दनाद्याचरणात्सुस्पष्टमवगम्यते शरीरेण सह किमपिविलक्षणसम्बन्धविशिष्टात्मपदार्थेऽस्मदादिशब्दाना मुख्यार्थता तिष्ठति, गौणार्थता चास्मदादिशरीरेष्वेवेति। तथा मृतशरीरस्थले पतिपुत्रादिशब्दा 'पति', 'पुत्र' इत्याकारकप्रत्ययगोचरीभूतं देहेन्द्रियातिरिक्तं निराकारात्मपदार्थं मुख्यतया, गौणतया च तत्तच्छरीरं बोधयन्तीति ज्ञेयम्।

पु०—पितरः! तथाप्यस्मदादिशब्दाना मुख्यार्थता देह एव भवाङ्गीकर्त्तव्यं नात्मपदार्थे। 'अहं यामि, 'असौ खादती'त्यादिप्रत्ययबलेन गमनादिक्रियाणा देह एव सम्भवतया भवदुक्ते प्रत्यक्षविरुद्धत्वात्।

पि०—वत्स! न चैवं वक्तुं शक्यते, मूर्त्तवस्तुभूतदेहे गमनादिक्रियासम्भवेऽपि चेतनात्मपदार्थसम्पर्कमन्तरेण तत्तत्क्रियासम्भवात्। मृतशरीरेऽपि तत्तत्क्रियाप्रसक्त्यापत्तेश्च। यत्तु त्वया वक्तव्यं त्वदुदाहृतप्रत्ययः शरीरमेव विषयीकरोति, नात्मानमिति। तन्न। तादृशप्रत्ययस्य शरीरविषयकत्वाङ्गीकारे तस्यान्तरिन्द्रियमनोजन्यत्वापलापेन बाह्येन्द्रियजन्यत्वाङ्गीकारापत्तेः। नास्य बाह्येन्द्रियजन्यत्वं सम्भवति। चक्षुर्निमीलनदशायामपि 'अहं'मित्याकारकानुभवे मानसत्वापलपनस्यायौक्तिकत्वात्। यदि चात्र त्वया वक्तव्यं शरीरस्य चाक्षुषप्रत्यक्षमेवाहंवस्तुनश्चाक्षुषप्रत्यक्षमिति। तदपि न। शरीरस्य चाक्षुषप्रत्यक्षेण तद्गतरूपादिगुणानामपि चाक्षुषप्रत्यक्षवत् 'अहं'मित्याकारकवस्तुनश्चाक्षुषप्रत्यक्षेण तद्गतसुखदुःखादिगुणानामपि चाक्षुषप्रत्यक्षत्वापत्तेः। अतोऽहंपदार्थस्य शरीरस्य च विभिन्नपदार्थत्वमवश्यमङ्गीकर्त्तव्यमेव। शरीरेण सह चक्षुरादीन्द्रियसंयोगाभावेऽपि 'अहं सुखी, 'अहं दुःखी' चेत्याद्याकारकानुभवात्। 'अहं यामी'त्यादौ वस्तुतो मूर्त्तपदार्थभूते चेतनपदार्थसहायेनैव क्रियाविशिष्टे शरीरे गमनादि-

क्रियासन्दर्शनेनात्मपदार्थे तत्तत्क्रियारोपो भ्रमप्रयुक्त एव। अमूर्त्तपदार्थमात्रे क्रियासम्भवात्।

पु०—पितर! आत्मैवाहम्प्रत्ययस्य विषय इति यदुक्तं प्राग् भवद्भिस्तन्मया नाङ्गीकर्त्तव्यम्। 'अहं काण', 'अहं बधिर', 'अहं कुब्ज', 'अहं स्थूल' 'अहं कृश' इत्यादौ लक्षणाया गौणार्थताया वा स्वीकारे नियमाभावेन तेषु सर्वत्राहंज्ञानस्य शरीरमवलम्ब्यैवोत्पत्तिवत् 'अहं सुखी, 'अहं दुःखी' इत्यादावपि 'अहं'मित्याकारकज्ञानस्य शरीरमवलम्ब्यैवोत्पत्तेः।

पि०—वत्स! 'रामो गच्छति' 'अहं शये' इत्यादौ रामादिशब्दाना तत्तच्छरीरेषु त्वया गौणार्थतासिद्धान्तस्यास्वीकरणादेवात्र विषये त्वं संशयितोऽसि नान्यथा। अन्धबधिरादिव्यक्तीनां चक्षुः कर्णादीन्द्रियविरहमात्रतादृशायामहंवस्तुबोधवत्तत्तदिन्द्रियविनाशदशायामपि तद्वस्तुबोधसत्त्वात्। घटपटादिबाह्यवस्त्वनुभवे यथा तारतम्यमस्ति तथा नाहंवस्त्वनुभवे। अत्रेदमवधेयं 'रामो गच्छती'त्यादौ यो गौणार्थः स्वीकृतः स 'गमनं करोती'त्यत्र 'करोति'पदस्य यत्करणं तत्तु चेष्टास्वरूपमेव न प्रयत्नस्वरूपमित्यभिप्रायेणेति। 'रामो गच्छती'तिवाक्यस्य 'शरीरविशेषस्यात्मैव गमनानुकूलप्रयत्नविशिष्ट' इत्याकारकोऽर्थः स्वीकर्त्तव्यस्तर्हि गौणार्थस्वीकारो न भवति। यच्च त्वया वक्तव्यं 'राम एव गमनं करोती'ति दर्शनेन चाक्षुषप्रत्यक्षं नापलपितव्यमिति। तन्न। रामशरीरगतचेष्टासन्दर्शनेन तदात्मप्रयत्नानुमानान्न तत्प्रत्यक्षं किन्त्वनुमानमेवेति निर्णीतत्वात्। ईदृशाप्रत्यक्षे प्रत्यक्षत्वज्ञानाङ्गीकरणस्यौपचारिकत्वं भ्रान्तत्वं वा बोध्यम्। अतः पूर्वोक्तौपचारिकत्वव्यवहारस्य प्रवृत्तायां भ्रम एव। यच्च पुनस्त्वया वक्तव्यं 'रामो गच्छती'त्यादौ रामगमनादीनां प्रत्यक्षं भवतीति रामादिपदानि यथा रामादिशरीरमात्रं बोधयन्ति, तथा 'अहं गच्छामि, खादामि

वे'त्यादावस्मद्गमनभक्षणादीनामपि प्रत्यक्ष भवतीत्यहपदमस्मच्छरीरमात्रं बोधयति । तद्भिन्न कमप्यात्मपदार्थमिति । अत्र ब्रूम । 'रामो गच्छती'ति प्रत्यक्ष न, किन्त्वनुमानमात्रम् । 'अहं गच्छामी'त्यादे प्रत्यक्षत्वेऽपि तस्य चाक्षुषप्रत्यक्षत्व न सम्भवति । अन्धकारेऽपि तादृशप्रत्यक्षसम्भवात् । 'अहं गच्छामी'त्यत्राहपदलभ्यवस्तुनो 'गच्छति'पदलभ्यगमनप्रयत्नस्य चान्तरत्वेनान्तरवस्तुविषयकप्रत्यक्षस्य मानसत्वमेव । यो हि पदार्थो मानस-प्रत्यक्षस्य विषयो बहि प्रत्यक्षस्य चाविषयोऽसौ न शरीर किन्तु तद्भिन्नो-ऽद्वयोऽस्पृश्यो विलक्षणात्मपदार्थ एवेति बोध्यम् ।

पु०—पितर ! तथापि शरीरस्यैव ज्ञानाश्रयत्वमिति मयाङ्गी-कर्तव्यम् , शरीरावच्छेदे एव स्पर्शादिज्ञानानुभवात् ।

पि०—वत्स ! न चैवं वक्तु शक्यते । आवयोर्मध्ये परस्परशरीरयो

परस्परयो प्रत्यक्षविषयत्ववत्परस्परज्ञानयोरपि परस्परप्रत्यक्षत्वापत्ते । 'यद्द्रव्य बाह्यप्रत्यक्षयोग्यं भवति तत्तद्द्रव्यनिष्ठगुणा अपि बाह्यप्रत्यक्षविषया भवन्ती'ति नियममाश्रित्य शरीरस्य चाक्षुषादिप्रत्यक्षयोग्यत्वेन तन्निष्ठरूप-गन्धस्पर्शपरिमाणादिगुणानामपि चाक्षुषादिप्रत्यक्षविषयत्वस-दर्शनाच्छरीरं बाह्यवस्तुस्वरूपमिति निर्णेतव्यम् । नास्याह्यवस्तुस्वरूपत्वमङ्गीकर्तव्यम् । ज्ञानादिगुणानामपि शरीरगुणत्वापत्ते । न च ज्ञानस्य शरीरगुणत्वमङ्गी-कर्तव्यम् । अपरव्यक्तिगतरूपादिगुणानामिव तद्व्यक्तिगतज्ञानादिगुणानामप्य-स्मच्चक्षुरादिबाह्येन्द्रियप्रत्यक्षविषयत्वापत्ते । यद्व्यक्तेर्यज्ज्ञान तद्व्यक्तेरेव तत्-ज्ञानप्रत्यक्षवद्बाह्येन्द्रियप्रत्यक्षयोग्यापरव्यक्ति शरीरात्मकद्रव्यगतप्रत्यक्षयोग्य-ज्ञानात्मकगुणेऽपरव्यक्तिप्रत्यक्षयोग्यतापत्तेश्च । अतो ज्ञान न शरीरस्य गुण किन्तु शरीरातिरिक्तात्मपदार्थस्यैवेति । यद्वा 'अह'मितिपदप्रकृतिभूता-स्मच्छब्दस्य मुख्यार्थो यत्र तिष्ठति स एवात्मेति । तथाचात्रानुमानमपि

'आत्मा तदितरपृथिव्याद्यष्टद्रव्यभिन्नो भवितुमर्हति, ज्ञानादिगुणवत्त्वा'दिति। 'आत्मेतराष्टद्रव्येष्वस्मच्छब्दमुख्यार्थता ज्ञानादिगुणाश्च नैव तिष्ठन्ती'त्याकारकबाधकज्ञानसत्त्वे शब्दगुणेनाकाशद्रव्यसिद्धिवद्विशेषसिद्धिर्भवति। विशेषशब्देनात्र पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यत्वस्य ग्रहणम्। आत्मत्व सिद्धौ न केवलमनुमानागमयो प्रामाण्यमङ्गीकुर्म। 'अहं'मित्याकारकाभ्रान्तप्रत्यक्षस्यापि तत्र विद्यमानतया युक्तेरपि तत्र प्रामाण्यदर्शनात्।

पु०—पितर! भवतु तर्हि, साम्प्रतमात्मन एकत्वबहुत्वविषये श्रीमता किमभिमतम्? तत्प्रतिपादनेनानुग्राह्य।

पि०—वत्स! त्वत्प्रश्नविषये विभिन्नदार्शनिकाना विभिन्नमतानि सन्दृश्यन्ते, तेषु यथा—सत्यपि रामश्यामादिदेहभेदे आत्मैक एव। सर्वशरीरावच्छेदेन वस्तुतु तज्ज्ञानोत्पत्तावविशेषात्। नैवात्मनो भेद सिध्येत्। तत्तद्देशावच्छेदेन शब्दोत्पत्तावपि शब्दकारणाविशेषादाकाशस्यैकत्ववद्यौगपद्यादि प्रत्ययकारणाविशेषात्कालस्यैकत्ववत्पूर्वापरादि प्रत्ययकारणाविशेषाद्द दिश एकत्ववदात्मभेदसाधककारणान्तराभावात्। अत आत्मन एकत्वमेवेति वेदान्तिन। एतन्मतं वैशेषिकादिदार्शनिका न सहन्ते। असौ राजा, अहं ब्राह्मणपण्डित, असौ कुष्ठी, असौ दरिद्र, अयं हस्तिक, असो कुक्कर, अयं पक्षी, अयं कीट, अयं स्थावर'श्चेत्याद्याकारेण परिदृश्यमानजगद्वैचित्र्योच्छेदापत्त। नात्र केवल प्रत्यक्षप्रमाणमङ्गीकुर्म, किन्त्वागमप्रमाणमपि। "तद्य इह रमणीयचरणा अभ्याशो ह रमणीया योनिमापद्यरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूया योनिमापद्येरन् श्वयोनिं शूकरयोनिं वा चाण्डालयोनिं वे"ति छान्दोग्योप-

निपत्पञ्चमाध्याय दशमखण्ड सप्तमानुवाकात्मकश्रुतिदर्शनात् । रमणीय श्रुतिस्मृत्याद्यविरुद्धत्वेन सुन्दर चरण कर्मानुष्ठान येषा ते रमणीयचरणा, कपूय श्रुतिस्मृत्यादिविरुद्धत्वेन कुत्सित चरण कर्मानुष्ठान येषा ते कपूयचरणा, सत्कर्मानुष्ठातार कुत्सितकर्मानुष्ठातारश्चेत्यर्थ । अभ्याशोऽवश्यमेवत्यर्थ । जीवात्मानो विभिन्नशरीरेषु विभिन्नाकारपापपुण्यादिकमाचरन्त्येव । जगद्वैचित्र्यकारणानुसन्धानदशाया विवेकिभिरवश्य जीवात्मा स्वस्वादृष्टानामेव कारणत्वमङ्गीकर्तव्यम् । अदृष्ट नाम स्वर्गनरकादिफलाधायकतत्तत्पापपुण्यकर्मानुष्ठानजन्यसंस्कारविशेष । तत्तु जीवात्मनि तिष्ठति । तद्वशेनैव जीवात्मा विभिन्नयोनिषु विभिन्नशरीराणि स्वीकृत्य तत्तददृष्टजन्यस्वर्गनरकादिविविधाकारसुखदु खादिभोगे भाग्यो भवतीति पुराणाद्यास्तिकशास्त्रसिद्धान्तात् । न चैवात्मन एकत्व कथमपि सम्भवति । जीवात्मसम्बन्ध शास्त्रविहितजन्ममृत्युसुखदु खस्वर्गनरकभोगादियावन्नियमोच्छेदापत्ते । न चैक एवात्मैतच्छरीरमाश्रित्य पुण्यमपरशरीर चाश्रित्य पापमाचरतीति वक्तुमुचितम् । लोके 'एकदैवैकस्य शरीरोत्पत्तिरपरशरीरस्य ध्वस' इति परिदृश्यमानतया सकलशरीरस्थायिनस्तस्यैकस्यैवात्मनो युगपत्परलोके स्वर्गसुखभोगस्येह लोके च जीवितमृतावस्थोपभोगस्य प्रसक्ते । इह लोकेऽपि मनुष्यपशुपक्षिप्रभृतिप्राणिषु कस्यचिदेकस्य सति सुखदु खादिभोगे तदितरसकलप्राणिनामपि तत्तत्सुखदु खादिभोगापत्तेश्च । यत इत्थ न भवत्यतो नात्मन एकत्वमिति निर्णयम् । जीवात्मा स्वस्वादृष्टानुसारेण वर्णाश्रमादिकमप्युपलभते । "वर्णा आश्रमाश्च स्वकर्मनिष्ठा प्रेत्य कर्मफलमनुभूय तत शेषेण विशिष्टदेशजातिकुलरूपायु श्रुतवित्तसुखमेधसो जन्म प्रतिपद्यन्त, विष्वञ्चो विपरीता नश्यन्ती"ति गौतमस्मृत्येकादशाध्यायोक्ते । वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रा, आश्रमा ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसन्यासा,

प्रेत्य मृत्वा, श्रुत शिक्षा, विप्लवो विपरीतगामिनश्चेत्यर्थ । स्वस्वकर्मनिष्ठा विभिन्नवर्णा विभिन्नाश्रमिणश्च मृत्योरनन्तर स्वस्वकर्मफलमनुभूय पश्चात्तेनैव भुक्तावशिष्टकर्मणा विशिष्टदेशजातिकुलरूपायु श्रुतधनचरित्रसुख लेपदेशधारणाक्षमबुद्धिविशिष्टा सन्तो जन्मोपलभन्ते, शास्त्रविपरीतगामिनस्तु नश्यन्तीति तत्स्मृत्यभिप्राय । आपस्तम्बे २।१।२।३ अप्युक्तम् "तत परिवृत्तौ कर्मशेषेण जाति रूप वर्ण बल मेधा प्रज्ञा द्रव्याणि कर्मानुष्ठानमिति प्रतिपद्यन्ते तच्चक्रवदुभयलोकयो सुख एव वर्त्तते"इति । ततस्तदनन्तर परिवृत्तौ प्रत्यावर्त्तनसमयोपस्थितौ तदानीं भुक्तावशिष्टकर्मानुसारेण जीवात्मानो जातिरूपादीन्युपलभन्ते । तदेवावशिष्टकर्मेहपरलोकयोश्चक्र वत्केवलसुख सम्पादयतीति तत्स्मृत्यभिप्राय । तत्र धारणावती बुद्धिर्मेधा, साधारणज्ञान च प्रज्ञति बोध्यम् । यद्यत्र केनचिदुक्तव्यं जीवात्मनो न कश्चिद्वस्तुतो भेदोऽस्ति, किन्तु मनसो विभिन्नत्वेनासङ्ख्यतया तत्संयोगवशो नैवैकस्यैवात्मनस्तादृशभेदो घटत इति । तन्न । एकदा यस्मिन् कस्मिन्नेकस्मिन्नेवात्मनि नानामन सयोगसम्भवेन तस्य युगपत्स्वर्गनरकसुखदु खादिविविधाकारभोगापत्ते । 'मदर्थं यथाविधि चण्डीपाठरुद्राभिषेकाद्यन्यतरकर्मानुष्ठात्रे नैष्ठिकब्राह्मणाय हविष्यार्थमेकमुद्रा दक्षिणार्थं च मुद्राद्वयमिति मिलित्वा प्रत्यह मुद्रात्रय दास्यामि, यस्यकश्चासौ तत्कर्म करोत्वित्युक्तवति कस्मिंश्चिद्यजमाने, तन्मुद्राप्राप्तिलोभेन तत्तत्कर्मानुष्ठातुर्ब्राह्मणस्योपयुक्तदक्षिणालाभजन्यानन्दस्य तादृशकर्मानुष्ठानजन्यक्लेशस्य च युगपदुपलब्धिवत्स्वर्गनरकादिभोगानामपि युगपदुपलब्ध्यापत्तेश्च । न चैवाम्रष्टापत्तिरिति ब्रूयात् । 'यत्क्षण एवाह सुखी तत्क्षण एवापरो दु खी'त्याकारकभोगवैषम्यस्य प्रत्यक्षेणैवोपलब्धे । अत पूर्वोक्तवैषम्यव्यवस्थासरक्षणाय तस्यानेकत्वमङ्गीकर्त्तव्यमेवेति तेषामभिप्राय ।

पु०—पितरः ! तथाप्यात्मनानात्वविषयकगौतमादिमतं मया नाङ्गीकर्त्तव्यम् । "एकं ज्ञानमानन्द"मिति श्रुत्यात्मन एकत्वप्रतिपादनेन "तत्त्वमसी'ति महावाक्येन च त्वं पक्षीकृत्य 'त्वं ब्रह्मासी'ति प्रतिपादनेन च तन्मतस्य श्रुतिविरुद्धत्वात् ।

पि०—वत्स ! न चैवं वक्तुं शक्यते । वेदान्तिमतोक्तश्रुतिद्वयस्य भिन्नतात्पर्यकत्वेनात्र प्रकृतानुपयोगित्वात् । प्रकृते न ह्यात्मैकत्वं सम्भवति । "द्वे ब्रह्मणी वेदितव्ये"इति कठोपनिषद्द्वितीयाध्यायपञ्चमवल्लीत्रयोदशानुवाकात्मिका "चेतनश्चेतनानाम्" इति श्वेताश्वतरोपनिषच्चतुर्थाध्यायषष्ठकण्डिकात्मिका "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति च । इत्यादिश्रुतिभिरात्मनानेकत्वप्रतिपादनात् । जीवात्मपरमात्मभेदेन ब्रह्मणः सगुणब्रह्मणो द्वैविध्यमिति प्रथमश्रुत्यर्थः । चेतनानां जीवात्मनामपि चेतनः परमेश्वरः परमात्मेति द्वितीयश्रुत्यर्थः । द्वा द्वौ सयुजा सयुजौ सर्वदा सहयुक्तावितियावत्सखाया सखायौ सुपर्णा सुपर्णौ सुन्दरौ पर्णौ पक्षौ ययोस्तौ पक्षिणावित्यर्थः । समानमेकं वृक्षं शरीरमित्यर्थः परिषस्वजाते आश्रितवन्तौ । तयोरन्य एको जीवात्मा स्वादु मिष्टं पिप्पलं फलमत्ति भक्षयति अन्य ईश्वरोऽनश्नन् अभुञ्जानः केवलमभिचाकशीति पश्यतीति तृतीयश्रुत्यर्थः । अस्य चात्मानेे युक्तिरप्यस्ति, यथा—वस्तुतस्त्वेकस्यैव वस्तुनोऽनेकत्वं न सम्भवति, किन्त्वनेकस्य वस्तुन एकत्वं सम्भवत्येव । बहुत्र बहुषु सजातीयवस्तुष्वेकत्वव्यवहारदर्शनात् । तथा हि यथासंख्यासरूपगोमहिषादिजीवेष्वेकस्या गोरेकस्य महिषादेर्वा सन्दर्शनेन द्वित्राश्चतस्रो गावो, द्वित्राश्चत्वारो वा महिषादिरिति न वदन्ति, परमेका गौः, द्वौ महिषौ, त्रयश्च छागा इत्याकारेण गणयन्ति । वस्तुतोऽसौ गौ नैका द्वित्राश्चत्वारश्च

महिषादय । तेषामसंख्यासंख्यत्वात् । किन्तु तत्र गोत्वमहिषत्वादि-जातिगतैकत्वमादायैवैकत्वादिव्यवहारादात्मनो वस्तुतोऽनेकत्वेऽपि तस्य जातिगतैकत्वमादायैव कत्वव्यवहार इति त्वदुक्तश्रुतिवाक्यद्वयतात्पर्यम् ।

पु०—महोदया ! अस्तु तर्हि, साम्प्रत परकीयात्मास्तित्व तद्गत-भेदश्च पुन कीदृश इति प्रतिपादनीयम् ।

पि०—वत्स ! जीवमात्रस्य प्रवृत्तिनिवृत्त्यात्मकक्रियाद्वय प्रति यथा-क्रममिच्छाद्वेषयो कारणत्वेन तस्य इष्टजनककर्मणि प्रवृत्तिर्दु खजनक-कर्मणि च निवृत्तिर्भवतीति प्रत्यक्षसिद्धैव । तदुभयपरिचितिस्तु स्वस्वशरीर-गतचेष्टामादायैव भवति । यथास्माक स्वस्वात्मनिष्ठस्वस्वप्रवृत्तिनिवृत्त्यो. स्वस्वचेष्टाजन्यत्वेन स्वस्वप्रयत्नान्तर्गततया वय कश्चित्कर्मणि प्रवर्त्तामहे कश्चित्कर्मणि च निवर्त्तामहे, तथापरापरप्राणिप्रवृत्तिनिवृत्तिभ्यामपि तत्त-त्प्राणिगतात्मानोऽप्यनुमेया एव । प्रयत्नस्यात्मनिष्ठत्व ज्ञानाधिकरण-वृत्तित्व चाबाधयम् । 'अह ज्ञात्वैव प्रवर्त्ते' इत्याकारकानुभवबलेन ज्ञान-प्रयत्नयोरेकाधिकरणवृत्तित्वसिद्धे । अथात्मगतभेदो निरूप्यते, यथा—आकीटब्रह्मपर्यन्ता वय सर्वेऽसंख्याता जीवात्मान एव । परमात्मैक एव । स एवेश्वरपदवाच्य जीवात्मनिष्ठज्ञानादिसकलगुणा अनित्या परमात्मनिष्ठज्ञानादिसकलगुणाश्च नित्या ।

पु०—महोदया ! तत्परमात्मन कुतो वेश्वर इति सज्ञा ।

पि०—वत्स ! तस्यैश्वर्यवत्त्वैनेश्वरसंज्ञालाभ । ऐश्वर्यपदेनाष्ट-सिद्धयो ग्राह्या । ताश्चाणिमलघिमप्राप्तिप्राकाम्यमहिमेशित्ववशित्वकामाव-सायितात्मिका । "अणिमा लघिमा प्राप्ति प्राकाम्य महिमा तथा । ईशित्व च वशित्वं च यत्र कामावसायिते" ति प्राचीनोक्ते । तत्राणिमा परमाणु-वत्सूक्ष्मतालाभशक्ति, लघिमा तूलादिवल्लघुतागुणापादनशक्ति, प्राप्ति-

भूमिगतस्यापि हस्ताभ्यां चन्द्रसूर्यादिस्पर्शनसामर्थ्यम्, प्राकाम्य यत्र कुत्रापीच्छानभिघातः, महिमा महत्परिमाणलाभशक्तिः, ईशित्वं शासनक्षमता, वशित्वं सकलवशीकरणशक्तिः, कामावसायिता चेच्छानुसारेण निर्बाधकार्यकरणसामर्थ्यम्। न चास्मन्मते जीवेश्वरयोरेकत्वं सम्भवति। तपोबलेन जीवात्मनः प्रोक्ताष्टविधैश्वर्येषु यथासम्भवैश्वर्यलाभसम्भवेऽपि परमात्मवत् सकलैश्वर्यलाभासम्भवात्।

दु०—महोदयाः! यदुक्तं प्राग् भवद्भिरीश्वरसिद्धौ वेदानामपि प्रामाण्यमस्तीति तन्मया नाङ्गीकर्तव्यम्। प्रथममीश्वरविषयकसन्देहेऽदूरापास्ते तत्सिद्धौ सत्रि श्वासरूपवेदानां प्रामाण्याङ्गीकरणस्यायौक्तिकत्वात्।

पि०—वत्स! न चैवं वक्तुमुचितम्। प्रथम पूर्वोक्तानुमानेनेश्वरसिद्ध्यनन्तरं पश्चात्तथाविधाविस्मयरचनाशालिपरमेश्वरनिःश्वासात्मकवेदानामपौरुषेयत्वमकाव्यप्रामाण्य चाङ्गीकृत्यास्तिकदार्शनिकैस्तत्प्रमाणेनापीश्वरसिद्ध्यङ्गीकारात्। ईश्वरसाधकश्रुतिप्रमाणानि प्राक् प्रदर्शितानि। किञ्चात्र युक्तिरपि, यथा—यद्वस्तुजातमस्मत्प्रत्यक्षगोचरीभूतं न भवति यत्तत्कार्यनिष्पत्तौ वा वयमसमर्था भवामस्तत्मकलवस्तूनां प्रत्यक्षे निष्पत्तौ वा यस्य सामर्थ्यमस्त्यसावश्यमस्मदपेक्षयाधिकशक्तिमान् विशिष्टतरश्चेति बाध्यतयाङ्गीकरिष्याम। तथाहि लोके घटपटादिकार्यनिर्मापककुम्भकारतन्तुवायादिस्तत्तत्कार्यनिष्पत्तेः प्राक् तत्तत्कारणीभूतकपालसूत्रादिवस्तूनि प्रत्यक्षीकृतवानेव। तत्तत्कार्यनिष्पत्तेः प्राक् तत्तत्कारणासत्त्वे तेषां तत्तत्कार्यनिष्पादकत्वादर्शनात्। चेतनेतरपदार्थस्य जन्यावयविमात्रकर्तृत्वं न सम्भवति। यो हि चेतनोऽवयविवस्तुमात्रस्योत्पत्तेः प्रागवयववस्तुमात्रस्य प्रत्यक्षं कृतवानसावश्यमस्मदपेक्षया विशिष्टशक्तिशालिचेतनपदार्थो भविष्यत्येव। ईश्वर एव तादृशपदार्थो

एभात् निविधज्ञानानां समुत्पत्तेः, शरीरमध्यमन्तरेणाप्यैवविध-कार्यकारित्वासम्भवाच्च शरीरोत्पत्तिविनाशावादाय मनसोऽप्युत्पत्तिविनाशा-विति त्वदुदाहृतवेदतात्पर्यार्थः। जीवात्मनो मनुष्यादिपाञ्चभौतिकशरीरधारणं प्रति मनस एव कारणत्वम्। "मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासक्तं मुक्तं निर्विषयं स्मृत"मिति ब्रह्मबिन्दूपनिषदुक्तेः। निर्विषय विषयनिर्मुक्तमित्यर्थः। विषयनिर्मुक्तमनःपुरुषस्य मोक्षो भवति, विषयासक्तमनःपुरुषस्य च बन्धो देवमनुष्यादिशरीरधारणं घटत इति श्रुत्यर्थः। अस्य द्रव्यत्वानेकत्वे पुनः कुतः स्वीक्रियेते इत्यपेक्षायामुच्यते—चक्षुरादी-न्द्रियरागभिन्नास्य संयोगघटनात्संयोगात्मकगुणवत्तया द्रव्यत्वं, प्रति-शरीरनियतत्वाच्चानेकत्वं बोध्यम्। अस्यैकत्वं नाशङ्कनीयम्। जीवमात्रस्य प्रत्येकं युगपद्विविधप्रयत्नविविधज्ञानप्रसङ्गात्। नानाव्यक्तीनां मनोभेदेन मतभेदवदेकव्यक्तेरप्येकदा मतभेदापत्तेः। एकविषयेऽपि सकलव्यक्तीनां युगपत्प्रवृत्तिनिवृत्त्युत्पत्तेश्च। इति न्यायादर्शे द्रव्यनिरूपणम्।

## अथ गुणनिरूपणम्—

पु०—पितर ! भवतु तर्हि, साम्प्रतं गुणनिरूपणेनानुग्राह्यः।

पि०—वत्स ! "सामान्यवत्त्वे सति कर्मान्यत्वे च सति कर्मवद्वृत्ति-पदार्थविभाजकोपाधिमत्त्वं गुणत्व"मिति गुणलक्षणम्। यो हि पदार्थो गुणत्वसत्तात्मकोभयजातिविशिष्टः कर्मभिन्नश्च सन् कर्मवद्द्रव्यपदार्थावृत्ति-गुणत्वात्मकपदार्थविभाजकोपाधिविशिष्टो भवति तादृशपदार्थ एव गुण-पदार्थ इत्यर्थः। तत्र सामान्यं नाम जातिः। तत्तु द्रव्यगुणकर्मस्वेव वर्तते, नान्यत्र। कर्मभिन्नरूपादिपदार्थे रूपत्वादिरूपसामान्यं तिष्ठति। तथा सति कर्मविशिष्टक्षित्यप्तेजोवाय्वात्मकद्रव्यचतुष्टयेऽविद्यमानः पदार्थ-विभाजकोपाधिर्गुणत्वरूपधर्मो वक्ष्यमाणरूपादिचतुर्विंशतिगुणेषु तिष्ठतीति

तल्लक्षणसमन्वय । ते च गुणा क्षित्यादिमनोऽन्तनवद्रव्यमात्रवृत्तय एव । स्थूलत इत्थं बोद्धव्यं यो हि पदार्थो द्रव्यकर्मभिन्नो भूत्वा द्रव्यमात्रवृत्तिर्भवति स एव गुणपदार्थ इति । स च गुणपदार्थ रूपरसगन्धस्पर्शसंख्यापरिमाण-पृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेह-संस्कार धर्माधर्मशब्दान्यतमाख्ययाभिहित । तत्र सूत्रकारकणादमहर्षिमते रूपादिप्रयत्नान्तसप्तदशसंख्यको भाष्यकारप्रशस्तपादमते च गुरुत्वद्रवत्व-स्नेह संस्कारधर्माधर्मशब्दात्मकसप्तसंख्यको मिलित्वा चतुर्विंशतिसंख्यक । न चैतावतास्य चतुर्विंशतिसंख्यात्वव्याघात शङ्क्य । कणादमहर्षिणा "रूपरसगन्धस्पर्शा संख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वा-परत्वे बुद्धय सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा" इति प्रथमाध्यायप्रथमाह्निक-षट्संख्यकसूत्रे 'च' शब्देनावशिष्टगुणाङ्गीकारात् । यत्तु त्वया वक्तव्यं गुणे गुणत्वजातिर्नाङ्गीकर्तव्येति । अत्रोच्यते कारणमात्रे कारणतारूपधर्म, कार्यमात्रे च कार्यतारूपधर्मस्तिष्ठति । ते कारणताकार्यते तु पुन केन-चिद्धर्मेणावच्छिन्ने भवत । अवच्छिन्न सीमाप्राप्त इत्यर्थ । रूपादि-गुणानां यत्किमपि कार्यं प्रति क्वचित्समवायिकारणता, क्वचित्त निमित्त-कारणतापि तिष्ठति । तथाविधकारणता गुणत्वरूपधर्मेणैवावच्छिन्ना भवति, न रूपत्वादिधर्मै सत्तया वा । रूपत्वादीनां रूपादिमात्रे, सत्तायाश्च द्रव्य-गुणकर्मस्वेव विद्यमानत्वेन रूपत्वादीनां गुणत्वापेक्षयाल्पदेशवृत्तितया सत्तायाश्च बहुदेशवृत्तितया प्रोक्तसमुदायचतुर्विंशतिगुणमात्रनिष्ठगुणत्वजाति-भिन्नपदार्थान्तरासम्भवात् । प्रोक्तकारणता गुणत्वधर्मानवच्छिन्नेति नाशङ्कनीयम् । निरवच्छिन्नकारणताया असम्भवात् ।

पु०—पितर ! अस्तु तर्हि, साम्प्रतमत्र रूपस्वरूप प्रतिपाद्यता कृपया ।

भवेत्तु जीवः । जीवात्मनोऽसर्वज्ञत्वेन सकलवस्तुविषयकज्ञाना-सम्भवात्तस्य सकलावयवविनिर्माणकर्तृत्वाभावात् । प्रलयानन्तरं महदादीनामुत्पत्तौ प्रागपि द्व्यणुकाद्यवयव्युत्पत्तौ चेतनपदार्थेश्वरस्यैव कारणताङ्गीकर्त्तव्या । तदानीं तदितरचेतनपदार्थान्तराभावात् ।

पु०—पितः ! तिष्ठत्वयमात्मविषयकविचारः, साम्प्रतं मम स्वरूप-निर्णयेनानुग्राह्य ।

पि०—वत्स ! विद्यमानेऽपि विषयेन्द्रियसम्बन्धे यदिन्द्रियमपेक्ष्यैव तत्तद्विषयकज्ञानं कथमपि नोदियात्तदिन्द्रियमेव मनः । घटपटादिबाह्य-वस्तुविषयकज्ञानं विषयेन्द्रियसन्निकर्षसद्भावे किन्त्विन्द्रियैः सह विषयेन्द्रिय-संयोगसत्त्वे जायते नान्यथेति नियमस्तथापि तत्र मनसोऽपेक्षा तिष्ठत्येव । तदान्तरमिन्द्रियमतिसूक्ष्मं नित्यमनेकं च । तेनैवेन्द्रियेणात्मनः सुख-दुःखादिसाक्षात्कारो भवति, किन्तु न केनापि बहिरिन्द्रियेण । विषयेन्द्रिय सम्बन्धसत्त्वे ज्ञानोत्पत्तिरतावता तत्र मनसो निरपेक्षता नैव शङ्क्या । तत्र स्वस्वानुभवविरोधात् । तथा हि यदस्माभिः कश्चित् प्रष्टव्यः कदाचिद्-गुरुमन्त्रेष्टदेवतादीष्टवस्तुषु कस्यचिच्चिन्तनावसरे तव स्वाग्रविद्यमान-घटपटादिविषयकज्ञानमासीन्न वेति ? तत्रावश्यं तेनोत्तरणीयं नासीदिति । उन्मुक्तायामपि रङ्गमञ्चादिगतयवनिकायां तत्रानुष्ठीयमाननृत्यगीताद्यभिनयं, कश्चिच्च शुकशारिकाकोकिलादिपक्षिविशेषमञ्जुकूजनं, कदाचिच्च मनो-मोहकरसङ्गीतमपि न प्रविशति कर्णकुहरे प्रमादाकारेण किमपि-विषयासक्तचित्तपुरुषस्य । तदानीं तस्यान्यमनस्कत्वात् । इत स्थिरीक्रियते प्रत्यक्षात्प्रागिन्द्रियसन्निकर्षवन्मनःसन्निकर्षो नासीदिति । अस्यायमभिप्रायो 'येनैवेन्द्रियेण यद्वस्तुप्रत्यक्षं भवति तेनेन्द्रियेण सह तदानीं मनःसंयोगस्तिष्ठत्येवे'ति । प्राणिनो घोरचिन्तनदशायामीदृशगूढ-

प्रदेशे मनस्तिष्ठति यत्र चक्षुरादीन्द्रियैः सह तत्संयोगो न घटते। सुषुप्ति-दशायामपि 'पुरीतन्नाड़ी'मध्ये मनस्तिष्ठतीति जीवो न किञ्चिदपि बुध्यते। ''यत्र सुप्तो न किञ्चन कामं कामयते न किञ्चन स्वप्नं पश्यति तत्सुषुप्त''मिति माण्डुक्योपनिषदुक्तेः। यत्र यस्यामवस्थायां, सुप्तो जीवश्चेत्यर्थः। नास्य मनसो मध्यमपरिमाणविशिष्टत्वं शङ्क्यम्। चाक्षुषादिवाह्यप्रत्यक्षे तत्तत्प्रत्यक्षोपयोग्युपकरणकलापसत्त्वेऽपि तदानीं तत्तदिन्द्रियैः सह तत्सूक्ष्मतममनसः संयोगाभावेन विषयबोधाभावात्। मध्यमपरिमाणविशिष्टघट-पटादिवस्तुमात्रस्योत्पत्तिविनाशशालित्ववत्तत्परिमाणविशिष्टमनसोऽप्युत्पत्ति-विनाशशालित्वापत्तेश्च। नाप्यस्य विभुत्वमङ्गीकृत्य सकलेन्द्रियैः सह सदा तत्सम्बन्धोऽस्तीति स्वीकर्त्तव्यम्। प्राणिनो घोरचिन्तनदशायामपि सांसारिकसकलविषयकबोधापत्तेः। न च तस्य तथाविधबोधः सम्भवति, तस्यातिसूक्ष्मत्वेन सदा सर्वत्र तत्संयोगासम्भवात्।

पु०—पितर! तथापि मनसो नित्यत्वं मया नाङ्गीकर्त्तव्यम्। 'तन्मनोऽसृजत'ेति श्रुत्या तस्योत्पत्तिवर्णनेनोत्पत्तिमद्वस्तुनो विनाशावश्य-म्भावात्। तत् शङ्केत्यर्थः।

पि०—वत्स! न चैव वक्तुं शक्यते। तस्य वायवीयपरमाणु-वन्नित्यत्वप्रतिपादनात्। वेदेऽस्योत्पत्तिविनाशवर्णनवन्मृत्यूत्तरकालेऽपि सद्-स्थितत्ववर्णनाच्च। उत्पत्तिपदेनास्य न जन्म, किन्तु शरीरेण सह सम्बन्धमात्रम्। आत्मनो मनःसाहाय्येनैव जन्मान्तरग्रहणाच्छरीरोत्पत्ति-विनाशमादायैव तत्सम्बन्धिमनसोऽप्युत्पत्तिविनाशशालित्ववर्णनात्। वस्तुतो नास्योत्पत्तिविनाशशालित्वमस्ति। जीवजन्मान्तरग्रहणसचिव-मनसैव तस्य मनुष्यपशुपक्षिवृक्षलतादिस्थावरजङ्गमात्मकविविधशरीर-सम्बन्धाङ्गीकारात्। तत्तच्छरीरसम्बन्धेनैव सुखदुःखादिविविधाकारभोगाना

पि०—वत्स ! "चक्षुरिन्द्रियमात्रग्राह्यत्वे सति गुणत्वं रूपलक्षणम् । सङ्ख्यादिगुणानामपि
चक्षुरिन्द्रियग्राह्यत्वात्तत्रातिव्याप्तिः तद्वारणाय लक्षणे मात्रपदोपादानम् । सङ्ख्यादिगुणानां त्वगिन्द्रियादि
नापि गृहीततया चक्षुरिन्द्रियमात्रग्राह्यत्वाभावात् तत्रातिव्याप्तिः । 'यो हि
गुणो यदिन्द्रियग्राह्यस्तद्वृत्तिजात्यादीनामपि तदिन्द्रियग्राह्यत्व'मिति नियमात्
रूपत्वेऽतिव्याप्तिस्तद्वारणाय गुणपदोपादानम् । तस्य जातिपदार्थत्वेन तत्र
गुणत्वाभावान्नातिव्याप्तिः । तत्र चक्षुर्मात्रग्राह्यत्व नाम चक्षुर्भिन्नेन्द्रिया-
ग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् । तत्र ग्राह्यत्व प्रत्यक्षविषयत्वमग्राह्यत्व च
प्रत्यक्षाविषयत्वं बोध्यम् । तत्र विशेष्यमात्रोपादाने रसादिगुणेष्वप्यतिव्याप्ति-
स्तद्वारणाय चक्षुर्मात्रग्राह्यत्वविशेषणोपादानम् । तेषां रसनादीन्द्रियेणापि
गृहीततया चक्षुरिन्द्रियमात्रग्राह्यत्वाभावान्न तत्रातिव्याप्तिः । तच्च रूपं
सप्तविधम् । शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् । तत्र शुक्ल शुभ्र,
नील कृष्णवर्ण, पीतो हारिद्रवर्ण, हरितो दूर्वादलवर्ण, कपिश कृष्ण-
पीतमिश्रितवर्ण, चित्रश्च नानावर्ण इत्यर्थः । तद्रूपं तु पृथिवीजलतेजोमात्र-
वृत्ति । तेषु पृथिव्यां सप्तविध, जलेऽभास्वरशुक्लरूप, तेजसि च भास्वर-
शुक्लरूपं तिष्ठतीत्यवधेयम् ।

पु०—पितर । अस्तु तर्हि, साम्प्रतं रसस्वरूप निरूपणीयम् ।

पि०—वत्स । "रसनेन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वं रसत्व"-
मिति रसलक्षणम् । यो हि गुण केवलरसनेन्द्रियेणैव गृहीतो भवति स
एव रस इत्यर्थः । रसत्वजातेरपि रसनेन्द्रियगृहीततया तत्रातिव्याप्ति-
स्तद्वारणाय लक्षणे गुणपदोपादानम् । तज्जातौ गुणत्वाभावान्नातिव्याप्तिः ।
स च रस षड्विध । मधुराम्ललवणकटुतिक्तकषायभेदात् । स तु पृथिवी-
जलमात्रवृत्ति । तत्र पृथिव्यां षड्विधो, जले च केवलं मधुररस । जले

मधुररसौत्कट्यस्यानुभवात्तत्र तद्रसाभावो नाशङ्कनीयः। हरीतक्यादि-कषायफलभक्षणोत्तरं पीते जले तद्गतमधुररसानुभवात्।

पु०—पितरः! अस्तु तर्हीदानीं गन्धस्वरूपं निरूपणीयम्।

पि०—वत्स! "घ्राणेन्द्रियग्राह्यत्वे सति गुणत्वं गन्धत्व"मिति गन्धलक्षणम्। गन्धत्वजातेरपि घ्राणेन्द्रियमात्रग्राह्यत्वेन तत्रातिव्याप्ते-स्तद्वारणाय तल्लक्षणे गुणपदोपादानम्। तज्जातौ गुणत्वाभावात्तत्र नाति-व्याप्तिः। स च गन्धो द्विविधः। सुगन्धदुर्गन्धभेदात्। असौ पृथिवी-मात्रवृत्तिः। स्वाभाविकगन्धः पृथिव्यामौपचारिकगन्धश्च जलवाय्वोः। औपचारिक आगन्तुक इत्यर्थः। अवयवद्रव्ये यज्जातीयगुणस्तिष्ठत्यवयवि-द्रव्येऽपि तज्जातीयगुणः समुत्पत्स्यत एव। अवयवावयविगतगुणयोः परस्पर-जन्यजनकभावसत्त्वात्।

पु०—पितरः! अस्तु तर्हि, साम्प्रतं स्पर्शस्वरूपनिरूपणेनानु-ग्राह्यः।

पि०—वत्स! "त्वगिन्द्रियमात्रग्राह्यत्वे सति गुणत्वं स्पर्शत्व"मिति स्पर्शलक्षणम्। यो हि गुणः केवलत्वगिन्द्रियेणैव गृह्यते, स एव स्पर्श इत्यर्थः। स्पर्शत्वरूपजातेरपि त्वगिन्द्रियग्राह्यतया तत्रातिव्याप्तेस्तद्वारणाय लक्षणे गुणपदोपादानम्। तादृशजातौ गुणत्वाभावान्नातिव्याप्तिः। संयोगादि-गुणानामपि त्वगिन्द्रियग्राह्यतया तत्रातिव्याप्तेस्तद्वारणाय तत्र मात्रपदो-पादानम्। तेषु त्वगिन्द्रियग्राह्यत्वसत्त्वेऽपि चक्षुरादीन्द्रियग्राह्यत्वस्यापि सत्त्वाच्च तेष्वतिव्याप्तिः। स च पृथिवीजलतेजोवायुमात्रवृत्तिः। सोऽपि त्रिविधः। शीतोष्णानुष्णाशीतभेदात्। तेषु जले शीतस्पर्शस्तेजस्युष्ण-स्पर्शः, पृथिवीवाय्वोश्चानुष्णाशीतस्पर्शस्तिष्ठति पृथिव्यामेव कठिनसुकुमार-

स्पर्शावपि तिष्ठत । रूपरसगन्धस्पर्शास्तावत् पृथिव्यां पाकजा अनित्याश्च भवन्ति, जलादिद्रव्यत्रये चापाकजा भवन्ति । शतधापि ध्मायमाने जले रूपादिपरिवृत्तिर्नैव घटते । जले सौरभौष्ण्यानुभवस्य 'पृथिवीतेजसोः सत्त्व सौरभौष्ण्ययोर्भान'मित्याकारकान्वयेन, 'पृथिवीतेजसोरभावे सौरभौष्ण्ययोरभाव' इत्याकारकव्यतिरेकेण च वायुपृथिव्योः शीतस्पर्शादेरिवौपाधिकत्वमेव । ते नु नित्यपरमाणुगताश्चेन्नित्या भवन्ति, द्व्यणुकाद्यनित्यद्रव्यगताश्चेदनित्या अपि भवन्ति ।

पु०—पितः ! भवतु तर्हि, साम्प्रतं पृथिवीगतपाकजरूपाद्युत्पत्त्युपवर्णनेनानुग्राह्यः ।

पि०—वत्स ! अवयवद्रव्यगतगुणानामेवावयविद्रव्यगतगुणानाम् असमवायिकारणता । पार्थिवद्रव्यगतरूपादिस्पर्शान्तगुणाः क्वचित्पाकजाः क्वचिदपाकजाश्च भवन्तीत्युक्तं प्राक् । पाकजत्वं नामाग्निसूर्यादितैजसद्रव्यसंयोगजन्यत्वम् । अपक्वकृत्कपालद्वयसंयोगेनैव घटनिर्माणात्, तद्घटकपालनिष्ठकृष्णरक्तादिगुणा एवापक्वघटे समुत्पद्यन्ते, किन्तु पार्थिवपरमाणुषु प्रथम कृष्णरक्तादिगुणाभावे द्व्यणुकादिक्रमेण कपाले तत्तद्गुणा नोत्पद्येरन् । घटधारायादिपक्वदशायामतिपक्वतावशेन तन्मूलकारणीभूतपरमाणुगतवर्णपरिवर्तनेन तद्वर्णविशिष्टपरमाणुभ्यो द्व्यणुकादिक्रमेण रक्तवर्णविशिष्टघटधाराद्युत्पद्यते । आपाकादिना घटादिपाकदशायामग्निप्रबलोत्तापगलितघटाद्यवयवसमूहदृढसंयोगशैथिल्ये जायमाने, तद्घटादिर्द्व्यणुकाद्याकारेण परिणमते । तदानीं द्व्यणुकभङ्गोपस्थितिकाले तदवयवभूतपरमाणवः स्पन्दन्ते । तत्स्पन्दनेन तेषां विभागो घटते । विभागात्पूर्वं यत्परमाणुद्वयस्य परस्परसंयोगेन द्व्यणुकोऽभूत्तत्परमाणुद्वयमध्यात्स्पन्दनवशेनैकस्मिन्नेव 'परमाणौ सति विभक्ते तत् संयोगोऽपि नश्यति, तत्परक्षणे च तद्द्व्यणुकोऽपि नश्यति ।

अग्निसंयोगवशेन सति विनष्टे तत्परमाणुगतश्यामादिरूपे, प्रथलाग्निसंयोगवशेन तत्परक्षणे तत्परमाणुष्वेव पूर्वतनरक्तरूप पुनरुत्पद्यते। तन्निर्मातृप्राण्यदृष्टवशेन पुन स्पन्दितस्तत्परमाणुसमूह पूर्ववियुक्ततत्तत्परमाण्वभिमुखगत सन् तदानीं वियुक्तावस्थापन्नपरमाणूना यद्यद्देशावच्छेदेषु संयोग आसीत्तत्तद्देशै सह तथा संयोगविनाशेन पूर्वतनतेभ्य एव वियुक्तस्तत्तत्परमाणुभि सह पुन संयोगे जायमाने तत्परक्षणे द्व्यणुकोत्पत्तिस्तत्परक्षणे द्व्यणुके रक्तवर्णोत्पत्तिस्तत्परक्षणे त्र्यसरेण्वुत्पत्तिस्तत्परक्षणे त्र्यसरेणौ रक्तवर्णोत्पत्तिरित्थं क्रमेण मृत्पिण्डकपालघटाद्याकारस्थूलवस्तुजात तत्र पुना रक्तवर्णश्च समुत्पद्यते। इत्थ प्राग्वदिममणुगतघटादिवस्तुविनाशोत्पत्तिरूपाद्भुतव्यापार कणादमहर्षिसम्मतोऽपि गोतममहर्षिसम्मतो न भवति। किञ्च पाको नाम विजातीयतेज संयोग। स च नानाजातीयरूपजनकस्तद्पेक्षया रसजनकस्तदपेक्षया गन्धजनकस्तदपेक्षया स्पर्शजनकश्च भवति। तत्तत्स्थलेषु कार्य्यवैलक्षण्यमादाय विभिन्नजातीयपाकाः कल्पनीया। यथा—आम्रादिफले तृणपुञ्जनिक्षिप्ते सत्युष्णतारूपविजातीयतेज संयोगवशेन तद्गतपूर्वहरितरूपविनाशे जाते, केवल पीतादिरूपान्तरोत्पत्ति र्घटते न रसान्तराद्युत्पत्ति। तत्र पूर्वतस्तत्तिन्तिडाम्लरसस्यैवानुभवात्। क्वचिच्च तत्फलगतपूर्वहरितरूपसत्त्वेऽपि तद्गतरसमात्रस्य परिवृत्ति र्घटते। तत्र विजातीयतेज संयोगरूपपाकवशात्पूर्वतनाम्लरसविनाशेन मधुररसानुभात्। अतोऽत्र रूपजनकपाकापेक्षया रसजनकपाको विलक्षण एवेत्यङ्गीकर्त्तव्यम्। क्वचित्तु तदुभयपाकापेक्षया तद्गन्धजनकपाकोऽपि विलक्षण। तत्र पूर्वतनरूपरसयोरपरावृत्तावपि तद्विलक्षणपाकवशात्पूर्वतनगन्धनाशेन विलक्षणगन्धोपलब्धे। एव स्पर्शजनकपाकस्ततोऽपि विलक्षण एव। यत्पाक-

घटात्तद्गतविलक्षणस्पर्शविनाशेन तत्र कोमलस्पर्शानुभवात्। अतो यथाकार्यं रूपादिजनकपाकानां विजातीयत्वमुन्नेयम्। सुतरां पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना तत्र विजातीयद्रव्यानुभवोऽपि भवति। यथा— गोमहिष्यादिभुक्तघासादिद्रव्याणामापरमाण्वन्तभङ्गेन तद्घासाद्यारम्भकपरमाणुषु विजातीयतेजःसंयोगात् तद्ग्रूपाद्यन्ते, तदनन्तरं तथाविधतेजःसंयोगैरेव तद्दुग्धगततादृशरूपरसादयः समुत्पद्यन्ते। तथाविधरूपरसादिविशिष्टपरमाणुभिर्यथाक्रमं द्व्यणुकत्र्यसरेण्वादिमहादुग्धारम्भः। एवं तद्दुग्धारम्भकपरमाणुभिर्दधि भवति। एव पाकमहिम्ना तद्दुग्धारम्भकपरमाणुभिरेव नवनीतादिकं समुत्पद्यत इति ज्ञेयम्। गौतमीयास्तावत्तादृशपाकप्रणालीमसहमानाः प्रणाल्यन्तरमङ्गीकुर्वन्ति। यथा— आपाकादिना घटादिपाकदशायां तदभ्यन्तरगततसूक्ष्मसूक्ष्म-छिद्रप्रदेशप्रविष्टवह्निनिष्ठ-सूक्ष्मसूक्ष्मशिखासमूहस्तद्गतसर्वावयवान् श्यामीकृत्य तद्गतवर्णान् परिवर्त्तयति, किन्तु वैशेषिकोक्तदिशा घटादीनां घटादिगतवर्णानां वा भूयोभूय उत्पत्तिविनाशौ तदानीं नैव घटेते। अयमेव क्रमः सर्वत्र पाकजरूपरसगन्धस्पर्शोत्पत्तौ ज्ञेय इति गौतमीयाभिप्रायः। यथा तथा भवतु नामोभयथाप्यन्यादितेजसपदार्थसंयोगेनैव पृथिवीनिष्ठरूपादिपरिवर्त्तनपरिदर्शनेन तद्गतरूपादीनां चतुर्णां पाकजत्वमवधेयम्। जलादिपक्षे ईदृशपरिवर्त्तनाभावेऽपि तत्तद्द्रव्यविनाशे तत्तद्द्रव्यगतरूपादिविनाशो घटत एव। नान्यथा। गौतमीयास्तु वैशेषिकोक्तदिशा परमाणुपाकं नाङ्गीकुर्वन्ति। असंख्यासंख्यावयव्युत्पत्तिविनाशात्मकगौरवात्, 'सोऽयं घटादि'-रित्याकारकप्रत्यभिज्ञानाच्च। 'सम्मुखवर्त्तिपदार्थे पूर्वदृष्टपदार्थस्य संस्कारेन्द्रियसन्निकर्षोभयजन्याभेदावगाहिज्ञानमेव प्रत्यभिज्ञा'। सा च 'सोऽयं देवदत्त' इत्याद्यात्मिका। तत्र तत्तांशे संस्कारस्येदन्तांशे चेन्द्रियार्थ-

सन्निकर्षस्य हेतुता ज्ञेया। तेन 'संस्कारेन्द्रियसन्निकर्षोभयजन्यज्ञानं' 'तत्तेदन्तावगाहिज्ञानं' वा प्रत्यभिज्ञे'त्यपि वक्तुं पारयेदिति।

पु०—पितर! भवतु तर्हि, साम्प्रतं सङ्ख्यास्वरूपं निरूपणीयम्।

पि०—वत्स! 'एकद्वित्रिचतुरादिगणनाव्यवहारासाधारणनिमित्तकारणत्वं सङ्ख्यात्व'मिति सङ्ख्यालक्षणम्। सा नवद्रव्यमात्रवृत्तिः। एकत्वादिपरार्द्धपर्य्यन्तापि। "एको दश शतं चैव सहस्रमयुतं तथा। लक्षं च प्रयुतं चैव कोटिरर्बुदमेव च। वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः। अन्त्यं मध्यं परार्द्धं च दशवृद्धया यथाक्रम"मिति प्राचीनोक्तेः। एकत्वरूपसङ्ख्या परमाण्वादिनित्यवस्तुगता चनित्या भवति। एकत्वनाशं प्रत्याश्रयनाशस्य हेतुत्वेन परमाणोराश्रयाभावात्तद्गतैकत्वस्याप्यनाशात्। सैव द्व्यणुकादिनित्यवस्तुगता चेदनित्यापि भवति। द्व्यणुकाद्याश्रयनाशेन तद्गतैकत्वस्यापि नाशात्। द्वित्वादिपरार्द्धान्तसङ्ख्यास्तु सर्वत्रानित्या एव। तासां व्यासज्यवृत्तित्वेन विविधवस्तून्याश्रित्य विद्यमानत्वेन चाऽपेक्षाबुद्धिजन्यत्वात्। अपेक्षाबुद्धेरेव द्वित्वादिसङ्ख्योत्पत्तिः। "अयमेकोऽयमेक, इमौ द्वा"वित्याकारेणानेकपदार्थेष्वनेकत्वविषयिणी बुद्धि रेवापेक्षाबुद्धिः। "अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यत" इति विश्वनाथकृतभाषापरिच्छेदोक्तेः।

पु०—पितर! घटपटादियावद्वस्तुगतैकत्वादिसङ्ख्यानां तत्तद्घटपटादिवस्तुस्वरूपत्वं यथाङ्गीकर्त्तव्यम्। तत्तद्वस्त्वाश्रित्यैव तत्तत्सङ्ख्याव्यवहारात्।

पि०—वत्स! सङ्ख्यानां यत्किमपि वस्तुस्वरूपत्वं नाङ्गीकुर्यां, विशेषणज्ञानमन्तरेण विशिष्टज्ञानासम्भवात्। गुणक्रियादिरूपभेदकधर्मो

विशेषण, विशिष्ट च विशेषयुक्तपदार्थ । विशेषो घटपटादिव्यक्तिरूप इत्यर्थ । नास्या घटघटत्वोभयस्वरूपत्वमपि वाच्यम्, पटादिष्वेकत्वप्रत्ययानुपपत्ते । नापि विभिन्नैकत्वस्य विभिन्नवस्तुस्वरूपत्वमङ्गीकर्त्तव्यम् । 'एको घट' 'एक पट'श्चेत्यादौ समानाकारैकत्वप्रत्ययानुपपत्ते । न चात्रैकत्वाद्यै भेदोऽङ्गीकर्त्तव्य । तत्रोभयविधज्ञाने घटपटोभयाश्रयो परस्परभेदसत्त्वेऽप्येकत्वाद्यै भेदासत्त्वात् । घटपटादिष्वैकत्वे एकैकत्वमेकत्वरूपज्ञायमानधर्मणैकीभूत न स्यात्तर्हि 'एक' इत्याकारकज्ञानाद्यै साम्य न तिष्ठदित्येकत्वादिधर्मा घटाद्यतिरिक्तपदार्था एवेति निर्णेयम् ।

पु०— पितर ! भवतु तर्हि, साम्प्रत परिमाणस्वरूपनिर्णयेमानुग्राह्य ।

पि०—वत्स ! 'अयमणु' 'अय क्षुद्र' 'अय महान्' 'अय दीर्घ'श्चेत्याकारकव्यवहारासाधारणनिमित्तकारणत्व परिमाणत्व'मिति परिमाण लक्षणम् । तच्चतुर्विधम् । अणुह्रस्वमहद्दीर्घभेदात् । तदेव परमाण्वादि नित्यद्रव्यगत चेन्नित्य भवति, द्व्यणुकाद्यनित्यद्रव्यगत चदनित्यमपि । आश्रयनाशेन तन्नाशात् । अणुपरममहत्परिमाणातिरिक्तपरिमाण स्वस्वपरिमाणापेक्षया महत्परिमाण जनयति । कपालसूत्रादिगतक्षुद्रक्षुद्रपरिमाणानि स्वस्वापेक्षया घटपटादिगतमहत्परिमाणजनकत्वात् । एव सर्वत्र । अथाणुपरममहत्परिमाणयो कारणत्वाभावो निरूप्यते, यथा— यदपेक्षया क्षुद्रो नास्ति सोऽणुयदपेक्षया च महान्नास्ति स परममहान् । तथाविधद्रव्यगताणुपरममहत्परिमाणयो कारणत्व न सम्भवति । 'यत्परिमाण यत्परिमाणजनक तत्परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्व'मिति नियमानुसारेण घटपटादिकारणी-

मृत्कपालसूत्रादिगतपरिमाणस्य तत्तत्कार्यभूतघटपटादौ स्वस्वापेक्षया महत्परिमाणजनकत्ववदणु-परिमाणविशिष्टपरमाणु-गतपरिमाणादणुतरपरिमाणस्य परममहत्परिमाणविशिष्टाकाशादिगतपरिमाणाच्च परममहत्तरपरिमाणस्योत्पत्तिप्रसङ्गात्। अणुपरिमाणविशिष्टपरमाणुद्वयेनैको द्व्यणुको, द्व्यणुकत्रयेण चैकस्त्र्यसरेणुरित्थं क्रमेण स्थूलपृथिव्याद्युत्पत्तेरणुपरिमाणविशिष्टपरमाणुगतपरिमाणस्य द्व्यणुकपरिमाणं प्रति कारणतया द्व्यणुके ततोऽणुपरिमाणं, त्र्यसरेणौ च ततोऽप्यणुतराणुपरिमाणमुत्पाद्यैवं क्रमेण घटपटादियावत्स्थूलद्रव्येष्वपि तादृशाणुतरादिपरिमाणोत्पत्तिसम्भवेन तत्सकलद्रव्याणामप्यप्रत्यक्षत्वापत्तेश्च।

पु०—पितरः! भवदुक्तदिशावयविपरिमाणं प्रत्यवयवपरिमाणस्य कारणत्वमनङ्गीकृत्य परमाणुगतसंख्यया द्व्यणुकादिगतसंख्याया एव वा कारणत्वं मयाङ्गीकर्त्तव्यम्। क्षुद्रकपालद्वयनिर्मितघटापेक्षया बृहत्कपालद्वयनिर्मितघटे परिमाणभेदोपलब्धेः। क्षुद्रघटाद्यवयवगतपरमाण्वपेक्षया बृहद्घटाद्यवयवगतपरमाणूनामधिकसंख्याकत्वाभावे तादृशभेदानुपलब्ध्या संख्याया एव तत्र कारणत्वमिति।

पि०—वत्स! अणुपरिमाणाद्यथावद्विपरीतपरिमाणस्य महत्परिमाणस्यैव प्रत्यक्षं प्रति कारणता। अणुपरिमाणस्य प्रत्यक्षयोग्यत्वासम्भवात्। महत्परिमाणं प्रति महत्परिमाणस्य, बहुत्वस्य, प्रचयस्यैव वा कारणता। प्रचयपदेनात्र समूह, उपचयो वा ज्ञेयः। अणुपरिमाणं प्रति द्वित्वस्य कारणता। परमाणुगताणुपरिमाणस्य नित्यत्वं द्व्यणुकगतपरिमाणस्य चानित्यत्वमवधेयम्। कलाये (मटर) मुद्गापेक्षया महत्त्वं, नारिकेलापेक्षया क्षुद्रत्वं तिष्ठतीति स्पष्टतरम्। तेन यथास्य कलायपदार्थस्य कदाचिन्महत्पदार्थे कदाचिच्च क्षुद्रपदार्थे गणना सम्भवति, अथवा

मार्जारस्य मूषिकापेक्षया महत्त्वेन महत्पदार्थमध्ये, कुक्कुरापेक्षया च क्षुद्रत्वेन क्षुद्रपदार्थमध्येऽपि गणना भवति। ईदृशक्षुद्रबृहद्व्यवहारं प्रत्यापाततः क्षुद्रत्वबृहत्त्वयोरेव मूलकारणता। एतत्क्षुद्रत्वं न वस्तुतो ऽणुत्वम्। कलायादिगतक्षुद्रबृहत्त्वयोरेकस्मिन्नपि वस्तुन्येकदा क्षुद्रबृहद्व्यवहारदर्शनात्। प्रकृते तु कलायादिगताणुत्वं नाणुत्वं, किन्त्वापेक्षिकक्षुद्रत्वमात्रम्। बृहत्परिमाणाद्यथावद्विपरीतपरिमाणस्यैवाणुपदार्थत्वेन कलायबिडालादावपि तादृशाणुपरिमाणवृत्तेः। 'एतदपेक्षयायं महान्, अयन्तु किञ्चिन्महान्, अयञ्च क्षुद्र' इत्याकारकव्यवहारस्य समानजातीयवस्तुष्वप्यनुभूयमानत्वेनाप्रत्यक्षीभूताणुपदार्थस्य तत्तत्पदार्थस्वरूपत्वाङ्गीकारे तत्तत्पदार्थानामप्यप्रत्यक्षत्वापत्तेश्च। अणुत्वमहत्त्वरूपगुणपदार्थ एवाणुमहच्छब्दयोर्व्यवहारो न तु तद्विशिष्टपदार्थे। गुणकर्मसु गुणकर्मणामविद्यमानतयाणुमहत्परिमाणात्मकगुणयोरणुत्वमहत्त्वविशिष्टपदार्थस्वरूपत्वासम्भवात्।

पु०—पितरः! गुणकर्मसु गुणकर्मणामविद्यमानत्वमङ्गीकृत्याणुत्वमहत्त्वयोरणुत्वमहत्त्वात्मकगुणाश्रयत्वमपलपनमयुक्तम्। 'एकः शब्दो द्वौ शब्दा'वित्यादौ शब्दादिगुणेष्वेकत्वादिसंख्यात्मकगुणानां, गमनादिकर्मसु च द्रुतत्वरूपकर्मणामनुभवात्।

पि०—वत्स! न चैवं वक्तुं युज्यते। शब्दादिष्वेकत्वादिसंख्याव्यवहारस्य, गमनादिकर्मसु द्रुतत्वरूपकर्मव्यवहारस्य चापकृतसम्बन्धमूलकत्ववदणुत्वमहत्त्वयोरणुत्वमहत्त्वात्मक—गुणाश्रयत्वव्यवहारस्याप्यपकृतसम्बन्धमूलकत्वात्। अपकृतपदेनारोपो ज्ञेय.। गुणकर्मावस्थितौ प्रकृतसम्बन्धस्तु समवाय एव। गुणकर्मणां द्रव्येषु समवायसम्बन्धेनैव वृत्तेः। जातिमन्तरेण कस्यापि पदार्थस्य समवायसम्बन्धेन गुणकर्मणो-

वृत्तित्व नैव सम्भवति। यथा सङ्ख्यादिगुणाना शब्दादिगुणेषु पर्याप्तिसम्बन्धेनैव विद्यमानता, न समवायसम्बन्धेन, द्रुतत्वादिकर्मणा च गमनादिकर्मसु कालिकसम्बन्धेनैव, विद्यमानता, न समवायसम्बन्धेन, तथाणुत्वमपि परिमाणात्मकगुणे सामानाधिकरण्यसम्बन्धेनैव तिष्ठति न समवायसम्बन्धेन। पर्याप्ति स्वरूपसम्बन्धविशेष, सामानाधिकरण्यं चैकाधिकरणवृत्तिता।

पु०—पितर! यदि भवद्भिरणुत्वमहत्त्वात्मकगुणयोरन्यान्यगुणकर्मस्वप्यणुत्वमहत्त्वयोरनवस्थितिः स्वीकरिष्यते, तर्हि 'दीर्घगमनम्, महान् शब्द'श्चेत्यादिव्यवहारो विलुप्यताम्। दीर्घमहदात्मकगुणयोर्गमनात्मककर्मणि, शब्दात्मकगुणे च तादृशदीर्घत्वमहत्त्वावस्थानाभावात्।

पि०—वत्स! न चैव वक्तु शक्यते। तत्र दीर्घगमनशब्देनाधिकदूरगमनस्य, महच्छब्देन चोच्चै शब्दस्य व्यवहृततया स्वत्कथनस्यौपचारिकत्वात्। औपचारिक आरोप इत्यर्थ। वस्तुतस्तु तादृशपरिमाण गुणकर्मसु नैव तिष्ठतीति ज्ञेयम्।

पु०—पितर! परिमाणमध्ये दीर्घह्रस्वगुणयो पृथगाकारेण निर्देशोऽनुचित इति मया वक्तव्यम्। महत्त्वेन सह दीर्घत्वस्य, लघुत्वेन च सह ह्रस्वत्वस्य सामानाधिकरण्यसत्त्वात्।

पि०—वत्स! न तत्र वस्तुत परस्परभेदोऽस्ति। महत्त्वाकारेण दीर्घत्वस्य, लघुत्वाकारेण च ह्रस्वत्वस्य निर्णीततया नाममात्रतस्तयो परस्परभेदसत्त्वेऽपि वस्तुगतभेदाभावात्। दीर्घत्वविरोधिपरिमाणमेव ह्रस्वत्वम्। यथा कश्चिदेकपदार्थ कस्यापि पदार्थस्यापेक्षया ह्रस्वोऽप्यपरपदार्थापेक्षया दीर्घो दृश्यते। ईदृग्ह्रस्वत्वदीर्घत्वव्यवस्थापेक्षिह्रस्वत्वं परमाणुमनोगतं चन्मुख्यं, तदतिरिक्तद्रव्यगत चेदापेक्षिकमेव। आश्रय-

विनाशेनैव परिमाणविनाशो घटते, नान्यथा। तेन परमाणुमनोगताणुपरिमाणस्याकाशकालदिगात्मगतपरममहत्परिमाणस्य च नित्यत्वं, तदतिरिक्तद्रव्यगताणुमहत्परिमाणद्वयस्यानित्यत्वमित्यवधेयम्। अनित्यपरिमाणस्यैवोत्पत्तिविनाशकारणाङ्गीकृतिः। उत्पत्तिकारणस्यावयवगतसंख्यादौ विनाशकारणस्य चानित्यद्रव्यविनाशे तद्गतपरिमाणस्यापि विनाश इति दर्शनात्। यद्यद्द्रव्यस्योत्पत्तिविनाशाभावस्तत्तद्द्रव्यगतपरिमाणस्याप्युत्पत्तिविनाशाभावः। तदुत्पत्तिविनाशयोः कारणाभावात्।

पु०—पितरः! इतः प्राक् कलायादिद्रव्यगताणुत्वस्याप्रकृतत्वमिति यदुक्तं भवद्भिस्तन्न रुचिकरम्। 'एतत्परिमाणं प्रकृतमप्रकृतं वे'त्याद्याकारकनिर्णयासम्भवभिया परिमाणघटितव्यवहारमात्रस्याप्यप्रकृतत्वापत्तेः।

पि०—वत्स! यद्वस्तुनो भ्रमविषयत्वमङ्गीकरिष्यसे तद्वस्तुनो यत्र कुत्रापि स्थले विद्यमानत्वमप्यङ्गीकर्त्तव्यम्। एकान्ततोऽविद्यमानवस्तुनः कथमपि भ्रमविषयत्वासम्भावात्। अतोऽणुमहतोरुभयोरस्तित्वमङ्गीकर्त्तव्यमेव। यद्वस्तुनि तथाविधपरिमाणादीनां विद्यमानत्वमवगन्तव्यं तद्वस्तुन्येव तस्य प्रकृतत्वव्यवहारः, किन्तु तथाविधास्तित्वस्वीकारात्प्रागेवेदमपि चिन्तनीयं यत्तदस्तित्वबोधविषये कश्चिद्बाधकोऽस्ति? न वेति। तत्र बाधकसत्त्वे तस्त्यागस्त्यागेन स्थानान्तरं मृग्यमेव।

पु०—पितरः! अविद्यमानवस्तुनो भ्रमविषयत्वं नाङ्गीकर्त्तव्यमिति यदुक्तं भवद्भिस्तत्र त्रुटिरिदम्। कुत्राप्यविद्यमानाकाशकुसुमशशविषाणादिपदार्थानामपि भ्रमविषयत्वाङ्गीकारात्।

पि०—वत्स! तर्हि त्वमस्माभिः प्रष्टव्यः—आकाशो नास्ति? उत कुसुमं नास्ति? आहोस्विदाकाशेन सह कस्यापि कुसुमस्य सम्बन्धो-

ऽपि नास्ती'ति। नात्र त्वया किमप्यपलपितव्यम्। तत्सर्वेषामेव सत्त्वात्। त्वमत्रेदं केवलं वक्तुं पारयेस्तस्यैवाकाशस्य तेनैव कुसुमेन साकं पुष्पपुष्प्युभयगतजन्यजनकभावसम्बन्धमात्रं नास्तीति। तत्र विद्यमानेऽपि प्रत्येकवस्तुगतसत्यत्वे मिलिताकारेण तेषामसत्यत्वमान भवति। परिमाणस्थले यदि परिमाणस्य सत्यस्य स्यात्तर्हि तत्सम्बन्धस्यापि कुत्रापि विद्यमानत्वं स्वीक्रियेथा, तेनाणुमहद्वस्तुद्वयमप्यवश्यमङ्गीकर्त्तव्यम्। अतस्तादृशपदार्थस्य भ्रमविषयत्वमिति वक्तुं न पारय। यद्विषये भ्रमो भवति तद्विषये प्रमाणविद्यमानत्वाङ्गीकारात्।

पु०—पितः! आकाशाद्यात्मान्तपदार्थानां परममहत्परिणवत्ता कुतः स्वीक्रियते?

पि०—वत्स! आकाशादीनां परममहत्परिमाणविशिष्टत्वमेव। ब्रह्माण्डान्तर्गतयावन्मूर्त्तवस्तुभिः सह तेषां संयोगसत्त्वात्। न च साधारणमहत्परिमाण विशिष्टपर्वतवृक्षादि पदार्थानामणुपरिमाणविशिष्टमनःपरमाण्वादि पदार्थानां च घटपटादियावन्मूर्त्तवस्तुभिः सह सर्वत्र संयोगः स्वीकर्त्तव्यः। यत्पदार्थो यत्परिमाणेन महान्, तत्पदार्थस्य तत्परिमाणक्षुद्रवस्तुभिः सह संयोगसम्भवात्। आकाशस्य परममहत्परिमाणवत्त्वं स्वीकर्त्तव्यमेव। सर्वस्मिन् स्थले शब्दोपलब्धेः। शब्दप्रत्यक्षस्यैवाकाशात्वज्ञापकात्। आत्मनोऽपि तादृशपरिमाणवत्त्वं नैव खण्ड्यम्। सुखदुःखादिसाक्षात्कारजन्मान्तरग्रहणरूपहेतुभ्यां तस्य तत्स्वीकारात्। अस्यात्मनोऽनित्यत्वं च नाङ्गीकर्त्तव्यम्। शरीरविनाशेन सहैव स्वर्गमोक्षादिफलापादकपापपुण्यादि कर्मणामपि विनाशेन तस्य स्वर्गनरकमोक्षाद्युच्छेदापत्तेः। आत्मनो-नित्यत्वाङ्गीकारे तस्य परमाणुमनोवदणुत्वं, परममहत्त्वं वाङ्गीकर्त्तव्यम्। तत्र नाद्यपक्षः सम्भवति। तेषामणुत्वेन तद्गतगुणानामप्रत्यक्षत्ववदणुपरि-

माणविशिष्टात्मपदार्थगतसुखदुःखादिगुणानामप्यप्रत्यक्षत्वापत्तेः। दैशिकपरत्वापरत्वे, कालिकपरत्वापरत्वे चादाय दिक्कालयोरपि परममहत्परिमाणत्वमङ्गीकृतम्। तयोस्तथात्वानङ्गीकारे एकस्मिन्नेव समये सकलदेशलोकानां, दूरत्वनिकटत्वव्यवहारस्य, ज्येष्ठत्वकनिष्ठत्वव्यवहारस्य चोच्छेदापत्तेः। कालदिशोरधिकाल्पसंयोगमात्रेणैव दूरत्वादिव्यवहारः। तेषां मध्यमपरिमाणवत्त्वमपि नाङ्गीकर्तव्यम्। मध्यमपरिमाणविशिष्टघटपटादिवस्तुमात्रस्योत्पत्तिविनाशवत्तथामप्युत्पत्तिविनाशापत्तेः। न चाप्रत्यक्षीभूताकाशादीनां काल्पनिकानन्तोत्पत्तिविनाशाः स्वीकर्तव्याः। तादृशोत्पत्तिविनाशास्वीकारापेक्षया तेषां नित्यत्वं, परममहत्त्वं चेत्यङ्गीकारेण लाघवात्।

पु०—महोदय! भवतु तर्हि, साम्प्रतं पृथक्त्वस्वरूपनिरूपणेनानुग्राह्यः।

पि०—वत्स! 'अयमस्मात्पृथग्'इत्याकारकव्यवहारासाधारणनिमित्तकारणत्वं पृथक्त्वमिति पृथक्त्वलक्षणम्। तत्तु सर्वद्रव्यमात्रवृत्ति। यदा तन्नित्यद्रव्यगतं भवति तदा नित्यं भवति, यदा त्वनित्यद्रव्यगतं तदानित्यमपि। आश्रयनाशेनैव तन्नाशात्। 'घट पटात्पृथग्'इत्याकारकज्ञानस्य विषयत्वं घटपटोभयगतपरस्परपार्थक्ये 'पटा'दिति पञ्चमीविभक्तिलभ्यावधित्वादौ च तिष्ठति। तादृशज्ञानविषयीभूतपार्थक्यात्मकपदार्थस्य रूपादिस्वरूपत्वं नैव सम्भवति। रूपादिज्ञानाभावेऽपि 'घटः पटात्पृथग्'इत्याकारकज्ञानोत्पत्तेः। न च पार्थक्यान्योन्याभावयोरेकत्वमाशङ्कनीयम्। 'घटः पटो ने'त्याकारकान्योन्याभावज्ञानस्य पञ्चमीविभक्तिलभ्यावध्यंशे विषयत्वाभावात्तादृशज्ञानद्वयगतवैलक्षण्यस्यैव तदुभयगतपार्थक्यसाधकत्वात्। वैधर्म्यं विरुद्धधर्मं एव वा पार्थक्यमिति वक्तुं न

पार्थे । अपक्वघटशरावादावग्निसंयोगद्वारा तद्गतश्यामादिरूपविनाशेन तत्र रक्तादिरूपजननानन्तरम्, 'अयं घटोऽस्माद् घटात्पृथ'गित्याकारकव्यवहारापत्ते । किञ्च मृगयादिसाधननलिकधनुर्बाणादिकमादाय मृगयार्थं गतवति कस्मिंश्चित् महाराजे 'तदवस्थाशून्यमहाराजादसौ महाराज पृथ'गित्याकारकव्यवहारापत्तेश्च । रक्तवर्णामघटयोर्नलिकादिशून्यमहाराजयोश्च तात्कालिकवैधर्म्यमस्त्येव । पृथक्त्वस्य पदार्थान्तरत्वमेवेति पूर्वोक्तयुक्त्या निर्णेयम् । 'गुणो गुणे न तिष्ठती'ति नियममादायाणुत्वमहत्त्वयोरणुत्वमहत्त्वासत्त्ववदेकत्वैकपृथक्त्वयोरप्येकत्वैकपृथक्त्वे नैव तिष्ठेताम् । द्रव्यातिरिक्तवस्तुषु प्रकृतसम्बन्धेन समवायेनैकत्वाद्यवृत्ते ।

पु०—पितर ! एकत्वस्यालीकत्वं मयाङ्गीकर्त्तव्यम् । द्रव्यातिरिक्तपदार्थेषु तद्व्यवहारसत्त्वेऽपि तत्र तद्व्यवहारस्याप्रामाण्याङ्गीकृतिवद्द्रव्येऽपि तद्व्यवहाराप्रामाण्याङ्गीकारेऽहानात् ।

पि०—वत्स ! पदार्थं सर्वथाऽसन्न भवति । एकान्ततोऽसत्पदार्थस्य भ्रमविषयत्वासम्भवात् । द्रव्ये तस्यैकत्वस्यालीकत्वनिर्णयोऽनुचित एव । यत्र कुत्रापि स्थले भ्रमकल्पितपदार्थस्याप्यवश्यविद्यमानत्वात् ।

पु०—पितर ! कार्यकारणयोरुभयत्रैवैकाकारैकत्वैकपृथक्त्वयोर्विद्यमानत्वं मयाङ्गीकर्त्तव्यम् । कुण्डले सुवर्णपिण्डस्य, पटे च तन्तूनामभेदाकारेण विद्यमानतया कार्ये यदेकत्वमस्ति कारणेऽपि तदेकत्वसत्त्वात् । 'कार्यात्कारणं पृथ'गित्यपि वक्तुमनुचितम् । अन्यवस्तुतो यत्पृथक्त्वं कार्ये तिष्ठति तत्पृथक्त्वस्यैव कारणेऽपि विद्यमानत्वात् । कार्यगतयत्पृथक्त्वमादाय 'तत्कार्यं तत्कार्यात्पृथ'गित्याकारकव्यवहारो यथा न भवति तथात्रापीति मया वक्तव्यम् ?

पि०—वत्स! न चैतत्कापिलमतं वयमङ्गीकुर्मः। काणादमतानुयायिभिरस्माभिर्वक्ष्यमाणरीत्या कार्यकारणगतपृथक्त्वाङ्गीकारात्। काणादानामस्माकमत्रायमभिप्रायो यत्—यद्वस्त्वेकमथवान्यवस्तुन एकपृथक्त्वविशिष्टमपि भवति, तद्वस्तुन आकृतिफलप्रमाणैरभिन्नत्वमावश्यकम्। एतद्वस्तुन्यपरवस्तुत किमपि वैधर्म्यं वैलक्षण्यं वा यदि तिष्ठेत्तदप्यभिन्नं भवति। यथैकस्मिन्नेव घटे एकत्वस्य, तत्र कम्बुग्रीवाद्यात्मकत्वरूपस्य, जलाहरणादिरूपफलस्य, तदीयपरिमाणस्य चैक्यं तिष्ठतीति तत्रैकत्वं स्वीक्रियते। तस्मिन्नेव घटेऽन्यवस्तुवैधर्म्यंघटत्वस्य तदव्याप्तित्वादेश्च सामानाधिकरण्यसत्त्वेऽपि कार्यकारणयोस्तेषामविद्यमानत्वमेव। न च सुवर्णकुण्डलयोरैक्यमाशङ्कनीयम्। सुवर्णपिण्डाकारस्य कुण्डलाकारस्य च परस्परविभिन्नत्वात्। सुवर्णपिण्डस्य शोभावर्द्धकत्वाभावेन तत्पिण्डं न कोऽपि कर्णे धारयति, किन्तु कुण्डलस्य शोभावर्द्धकत्वेन कर्णे तत्परिधानमेव। चक्षुःसन्निकर्षादिना प्रत्यक्षीभूतेऽपि केवलसुवर्णपिण्डे तदानीं कुण्डलस्याप्रत्यक्षत्वेन सुवर्णपिण्डकुण्डलयोर्विभिन्नत्वमेव। कुण्डलेऽन्यवस्तुवैधर्म्यसत्त्वेऽपि तत्समानाधिकरणरूपवैधर्म्यं नास्त्येव। कुण्डलत्वेन साकं सुवर्णपिण्डत्वस्य, सुवर्णपिण्डत्वेन साकं च कुण्डलत्वस्य सामानाधिकरण्याभावात्। इत्थं तन्तुपटत्वयोः कपालत्वघटत्वयोश्च परस्परसामानाधिकरण्याभावो ज्ञेयः। कार्यकारणयोराकारादिगतभेदो विभिन्नाकारवैधर्म्यं च तिष्ठत्येव। कुण्डलगतकर्णधारणरूपफलस्य, वस्त्रगतपरिधेयरूपफलस्य, घटगतजलानयनरूपफलस्य च सुवर्णपिण्डतन्तुकपालेष्वविद्यमानत्ववत्सुवर्णपिण्डगतकुण्डलादिसाधनरूपफलस्य, तन्तुगतसीवनसाधनरूपफलस्य, कपालगतघटादिनिर्माणसाधनरूप फलस्य च कुण्डलपटघटेष्वभावात्। पूर्वोक्तवैधर्म्यसन्दर्शनेनास्माभि-

स्थिरीक्रियते यत् 'कुण्डलं सुवर्णपिण्डात्पटस्तन्तुभ्यो, घटश्च कपालयोः पृथ'गिति। अतः कार्यकारणयोरेकाविधैकत्वसंख्यैकपृथक्त्वे नैव तिष्ठेताम्। अनित्यरूपादिवदनित्यसंख्यानित्यपृथक्त्वे अवयवसंख्यादिजन्ये भवतः। किन्तु ते संख्यापृथक्त्वे एवैकत्वैकपृथक्त्वस्वरूपे इति ज्ञेयम्। द्वित्वाद्याश्रयद्रव्यगतप्रत्येकैकत्वसंख्याया एव द्वित्वादिसंख्याद्विपृथक्त्वादिकं प्रति कारणता। 'गोपालगोविन्दौ रामात्पृथ'गित्याकारकपृथक्त्वज्ञानस्य द्विपृथक्त्वविषयकत्वात्।

पु०—पितरः! भवतु तर्हि, साम्प्रतं संयोगत्वस्वरूपनिर्णयेनानुग्राह्यः।

पि०—वत्स! यद्गुणबलेन पृथक्पृथगवस्थितपदार्थानामेकत्र मिलनं घटते स संयोगः। किं वा 'इमौ घटपटौ संयुक्ता'वित्याकारकव्यवहारासाधारणनिमित्तकारणत्वं संयोगत्व'मिति संयोगलक्षणम्। स च सर्वद्रव्यवृत्तिः। असौ त्रिविधः। एककर्मोभयकर्मसंयोगजभेदात्। तेषु यस्मिन् कस्मिन्नपि वृक्षपर्वतादावुड्डीयमानपक्ष्याद्युपवेशनेन तत्तद्वृक्षादिभिः सह तत्तत्पक्ष्यादीनां यः संयोगो घटते तादृशसंयोग एवैककर्मजन्यसंयोगः। तस्य पक्षिक्रियामात्रजन्यत्वात्। युद्धादिकर्मप्रवृत्तयोर्ययोः कयोरपि नरपशुपक्ष्यादिपदार्थयोः परस्परसंयोग एवोभयकर्मजन्यसंयोगः। तस्य तत्तदुभयपदार्थनिष्ठक्रियाजन्यत्वात्। यत्र च पुस्तकादिवस्तुभिः सह हस्तसंयोगेन पुस्तकेन सह यः शरीरसंयोगो घटते स एव संयोगजसंयोगः। तस्य हस्तपुस्तकद्वयसंयोगादेवोत्पत्तेः। तत्र कर्मजसंयोगोऽपि द्विविधः। अभिघातनोदनभेदात्। तत्र भेर्यादौ हस्तदण्डादिसंयोगजशब्दहेतुकसंयोगोऽभिघातजसंयोगस्तादृशशब्दाहेतुकसंयोगश्च नोदनसंयोगः। संयोगस्य क्वचित् क्रियाजन्यत्वात्क्वचिच्च संयोगजन्यत्वात्।

पु०—पितर ! भवतु तर्हि, साम्प्रतं विभागस्वरूपनिरूपणेनानुगृह्णन्तु ।

पि०—वत्स ! 'मिलितपदार्थसंयोगनाशकगुणो विभागः'। असौ नव द्रव्यमात्रवृत्तिः । स च त्रिविधः । अन्यतरकर्मजोभयकर्मजविभागजभेदात्। तत्र पक्षिप्रभृतीनां वृक्षपर्वतादिस्थानादुड्डीयनादिकर्मणा स्थानान्तरप्राप्तिसमये वृक्षादिना सह जायमानविश्लेषोऽन्यतरकर्मजन्यविभागः । तस्य पक्ष्यादिमात्रक्रियाजन्यत्वात्। यत्र युयुत्स्वोर्ययोः कयोरपि पुरुषयोर्मेषादि पश्वोर्वा सङ्घर्षसहायाभिघातानन्तरं क्षणकालार्थं तदुभयो पश्चात्पदेनावस्थानदशायां तदुभयापसरणात्मककर्मजोभयकर्मजविभागः । तादृशापसारणात्मकविभागस्य तदुभयविभागं प्रति कारणत्वात्। यत्र च पुस्तकादिना सह हस्तादिविभागानन्तरं तेन सह जायमानशरीरादिविभागो विभागजविभागः । तस्य हस्तादिविभागजन्यत्वात्। अथ विभागजविभागोऽपि द्विविधः । कारणमात्रविभागकारणाकारणोभयविभागजविभागभेदात्। तत्र वस्त्रादिकारणसूत्रादिशैथिल्येन वस्त्रादिभिः सह जायमानसूत्रादिविभागः कारणविभागजविभागः । तस्य सूत्रादिभिः सहाविभक्तकालीनसंयुक्तस्थानविभागसम्पादकत्वात्। यत्र पुस्तकादौ हस्तादिकं दत्वा तदपसारणेन पुस्तकादिविभागद्वारा शरीरेण सहोत्पन्नपुस्तकादिविभाग एव कारणाकारणविभागजविभागः । तत्र पुस्तकादिभ्यो हस्तादिविश्लेषणेन शरीरविश्लेषणस्य निश्चिततया पुस्तकादीनां शरीरस्य च परस्परविभागं प्रति हस्तविभागस्यैव कारणत्वात्। अत्रावयवविभागेनैवावयविविभागो जातः । हस्तपदाद्योऽवयवाः शरीरं चावयवि। अवयविनं प्रत्यवयवानामेव कारणता नान्यस्य। शरीरं प्रति पुस्तकादीनां कथमपि कारणत्वासम्भवाद्धस्तादिविभागस्य कारणकारणोभयविभागजन्यत्वमवधेयम्।

संयोग सश्लेषो, विभागश्च विश्लेष । न च संयोगाभाव एव विश्लेष इत्युच्या । 'रूपघटौ विभक्ता'वित्याकारकप्रत्ययापत्ते । नहि रूपघटयो परस्परसंयोगोऽस्तीति शङ्क्यम् । संयोगस्य गुणत्वेन सम्बन्धिद्वयगतत्वेन च निर्गुणे गुणात्मके रूपे तदभावाद्रूपघटयो संयोगस्य स्वीकर्तुमशक्यत्वात् । अतो रूपरूपिवस्तुनो परस्परसंयोगमनङ्गीकृत्य परस्परसमवेतत्वमेवाङ्गीकर्तव्यम् । घटादिगतकृष्णरक्तादिरूपाणा तत्तद्घटादौ समवायसम्बन्धेनैव विद्यमानत्वात् । न च 'संयोगध्वस एव विभाग' इत्युच्या । तत्र तत्पूर्वतो यस्य कस्यापि संयोगध्वसस्य विद्यमानत्वेन 'तौ विभागयुक्तौ, विभक्तौ वे''त्याकारकप्रत्ययापत्ते । नापि सकलविधसंयोगध्वस एव विभाग इति वक्तु पारये । सकलसंयोगेषु भविष्यत्संयोगस्यापि विद्यमानत्वेन विभागदशायामपि विभागज्ञानाभावापत्ते । नाप्यतीतसंयोगध्वस एव विभाग इत्युच्या । वर्तमानसंयोगकालेऽप्यतीतसकलविधसंयोगध्वसस्त्वेन तदानीं विभागज्ञानस्यानिवार्यत्वात् । अत संयोगविभागौ पृथग्गुणाविति ज्ञेयम् ।

पु०—पितर ! भवतु तर्हि, साम्प्रत परत्वापरत्वस्वरूपनिर्णयेनानुग्राह्योऽहम् ।

पि०—वत्स ! 'परव्यवहारासाधारणनिमित्तकारण परत्वम्' 'अपरव्यवहारासाधारणनिमित्तकारणं चापरत्व'मिति तदुभयलक्षणम् । एतदुभय पृथिव्यप्तेजोवायुमनोमात्रे वर्तते । ते च प्रत्येक द्विविधे, दिक्कृतकालकृतभेदात् । तत्र दूरस्थपदार्थे दिक्कृतपरत्व, निकटस्थपदार्थे दिक्कृतापरत्वं, ज्येष्ठव्यक्तौ कालकृतपरत्व, कनिष्ठव्यक्तौ च कालकृतापरत्वं तिष्ठति । परपदेनात्र दूरप्राचीनयोरपरपदेन च निकटार्वाचीनयोर्ग्रहणम् । तेन पदार्थद्वयमध्ये यद्द्रव्यापेक्षया यद्द्रव्येऽधिकपदार्थसंयोगो घटते तद्द्रव्यस्य

तद्द्रव्यापेक्षया परत्वं, यद्द्रव्ये च यद्द्रव्यापेक्षयाल्पपदार्थसंयोगो घटते तद्द्रव्यापेक्षया तद्द्रव्यस्यापरत्वमेवेति निर्णेयम् । तत्र दैशिकपरत्वापरत्वोदाहरणं यथा—श्रीजगन्नाथपुरीतः कटककालिकापत्तननगरयोर्मध्ये कटकनगरापेक्षया कालिकापत्तननगरे दैशिकपरत्वं तिष्ठति, कालिकापत्तनापेक्षया ▮ कटकनगरे दैशिकापरत्वमेव तिष्ठति । पुरीतो दूरवर्त्तिनि कालिकापत्तने सूर्यकिरणादियावद्रूपसंयोगपरम्पराधिक्यस्य, निकटवर्त्तिकटके च तादृशसंयोगाल्पत्वस्य विद्यमानत्वात् । कालिकपरत्वापरत्वोदाहरणं च यथा—यत्रैककालस्थितपदार्थद्वयमध्ये सूर्यकिरणस्पन्दनाधिक्यमस्ति तत्र कालिकपरत्वं ज्येष्ठत्वं वा, यत्र च तत्स्पन्दनाल्पतास्ति तत्र कालिकापरत्वं कनिष्ठत्वं वाऽवधेयम् । दैशिकपरत्वापरत्वयोर्मूर्त्तद्रव्यमात्रवृत्तित्वं, कालिकपरत्वापरत्वयोश्च जन्यद्रव्यमात्रवृत्तित्वं, समवायात्मकद्रव्यादिसंयोगं प्रत्यसमवायिकारणत्वं च बोध्यम् । अपेक्षाबुद्धिनाशेन च तदुभयविनाशो घटते ।

पु०—पितः ! भवतु तर्हि, साम्प्रतं गुरुत्वस्वरूपं निरूपणीयम् ।

पि०—वत्स ! 'आद्यपतनासमवायिकारणं गुरुत्व'मिति गुरुत्वलक्षणम् । वेगस्यापि द्वितीयपतनक्रियां प्रत्यसमवायिकारणत्वेन तत्रातिव्याप्तेस्तद्वारणायाद्यांशोपादानम् । आद्यपतनात्मकक्रियां प्रति दण्डलोष्ट्रादीनामपि निमित्तकारणत्वेन तत्रातिव्याप्तेस्तद्वारणायासमवायिकारणपदोपादानम् । घटादिगतरूपादिकं प्रति कपालादिगतरूपादेरसमवायिकारणत्वेन तत्रातिव्याप्तेस्तद्वारणाय पतनपदोपादानम् । अस्य पृथिवीजलमात्रवृत्तित्वमतीन्द्रियत्वं च । यदा चैतत्परमाणुरूपनित्यद्रव्यगतं भवति तदा तस्य नित्यत्वं यदा च द्व्यणुकाद्यनित्यद्रव्यगतं भवति तदा तस्यानित्यत्वमप्यवधेयम् ।

पु०—पितः ! भवतु तर्हि, साम्प्रतं द्रवत्वस्वरूपं निरूपणीयम् ।

पि०—वत्स ! 'आद्यस्यन्दनासमवायिकारणं द्रवत्व'मिति द्रवत्वलक्षणम्। स्यन्दनं नाम स्रवणरूपक्रियाविशेषः। प्रतिरुद्धसलिलादिस्थले स्यन्दनं प्रति दण्डादीनामपि निमित्तकारणतया तत्रातिव्याप्तेस्तद्वारणायासमवायिकारणपदोपादानम्। अवयवविनिष्टसादीनामत्रयविनिष्टसादिकं प्रत्यसमवायिकारणतया तत्रातिव्याप्तेस्तद्वारणाय स्यन्दनपदोपादानम्। तत्तु पृथिवीजलतेजोमात्रवृत्ति। तद् द्विविधम्, सांसिद्धिकनैमित्तिकभेदात्। तत्र तेजःसंयोगादिकारणनैरपेक्ष्येणाद्य प्रसरणशीलद्रवत्वं सांसिद्धिकं, तादृशकारणसापेक्ष्येणाद्य प्रसरणशीलद्रवत्वं च नैमित्तिकम्। तन्मध्ये सांसिद्धिकद्रवत्वं जले, नैमित्तिकद्रवत्वं च पृथिवीतैजसयोः। पार्थिवघृतजत्वोस्तैजससुवर्णरौप्यादौ च प्रखरसूर्यकिरणाग्न्यादितैजसद्रव्यसंयोगेनैव द्रवत्वोत्पत्तेः। तस्य जलीयपरमाणुगतत्वे नित्यत्वं, जलीयद्व्यणुकादिगतत्वे, पार्थिवतैजसपरमाणुद्व्यणुकादिगतत्वे चानित्यत्वमवधेयम्।

पु०—पितः ! तिष्ठतु तर्हि, साम्प्रतं स्नेहस्वरूपनिर्णयेनानुगृहाण।

पि०—वत्स ! 'चूर्णादिद्रव्य-धारणाकर्षणकारणीभूतविलक्षणसंयोगासाधारणनिमित्तकारणगुणत्वं स्नेहत्व'मिति स्नेहलक्षणम्। असौ जलमात्रवृत्तिः। तथाविधसंयोगं प्रति कालादीनामपि निमित्तकारणतया तत्रातिव्याप्तेस्तद्वारणाय गुणपदोपादानम्। तादृशसंयोगं प्रति जलगतस्नेहस्यैवासाधारणनिमित्तकारणत्वं, न तु तद्गतद्रवत्वस्य। तथानङ्गीकारे चूर्णादिद्रव्येषु द्रुतसुवर्णादिसंयोगेनापि तादृशसंयोगापत्तेः। वस्तुतस्तु तादृशसंयोगे द्रुतजलसंयोगस्यैव कारणता। तत्र स्नेहकारणतायां प्रमाणाभावात्। करकादिव्यावृत्तये जले द्रुतत्वविशेषणम्। यदत्र त्वया वक्तव्यं बहुत्र तृणकाष्ठाद्यग्निसंयोगेनापि ज्वलनासम्भवेन स्नेहस्य न जल-

इति । प्रोक्तवर्णात्मकशब्दोऽपि त्रिविधः । वायुकण्ठसंयोग-जोष्ठद्वयविभागजवीचीतरङ्गन्यायजभेदात् । असौ संस्कृतभाषादिरूपः । शब्दं प्रत्याकाशस्य समवायिकारणत्वं, कण्ठाकाशादिसंयोगस्यौष्ठाकाशादि-विभागादेश्चासमवायिकारणत्वमवधेयम् । यद्यत्र त्वया वक्तव्यं शब्दस्य द्रव्यकर्मान्यतरस्वरूपत्वमस्त्विति । तन्न । वक्ष्यमाणयुक्त्या तत्खण्डनात् । तथाहि आकाशकालदिगात्ममनःपरमाणव एवासमवेतद्रव्याणि, तदितरावयविद्रव्यमात्रं चानेकसमवेतद्रव्यम् । द्रव्यस्यासमवेतानेकसमवेतभेदेन द्वैविध्यात् । अवयविरूपजन्यद्रव्यमात्रं स्वस्वावयवेषु समवाय-सम्बन्धेनैव तिष्ठति । एकेनैवावयवेन जन्यद्रव्योत्पत्त्यसम्भवात् । शब्दस्यानेकसमवेतत्वमसमवेतत्वं वा न सम्भवति । तस्य समवाय-सम्बन्धेनाकाशमात्रवृत्तित्वात् । अतोऽस्य न द्रव्यस्वरूपत्वम् । नापि कर्मस्वरूपत्वम् । स्पन्दनात्मककर्मणश्चक्षुस्त्वगिन्द्रियद्वयग्राह्यतया शब्दस्य च श्रवणेतरेन्द्रियाग्राह्यतया कर्मशब्दयोः परस्परवैलक्षण्यदर्शनात् ।

पु०—पितः ! शब्दस्य चाक्षुषप्रत्यक्षयोग्यत्वाभावमात्रात् कर्म-विशेषस्वरूपत्वापलपनमयुक्तम् । वायुमनोगतकर्मणां चाक्षुषप्रत्यक्षयोग्य-त्वाभावेऽपि तेषां कर्मस्वरूपत्वाङ्गीकृतिवच्छब्दस्य चाक्षुषप्रत्यक्षयोग्यत्वा-भावेऽपि कर्मस्वरूपत्वाङ्गीकारेऽहानात् ।

पि०—वत्स ! शब्दस्य कर्मस्वरूपत्वं कथमपि माङ्गीकुर्याः । त्वदुक्तदृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तथा हि वायुमनसोरन्यतरत्र स्पन्दनात्मककर्मणश्चाक्षुषप्रत्यक्षविषयत्वासम्भवेऽपि वृक्षादिष्वनेकत्र तस्य चाक्षुषप्रत्यक्षविषयत्वसम्भवात्, शब्दस्य च कदाचित् कुत्रापि स्थले चाक्षुषप्रत्यक्षविषयत्वासम्भवात्स्पन्दनशब्दयोश्चाक्षुषप्रत्यक्षविषयत्वा-विषयत्वाभ्यां तदुभयगतभेददर्शनेनैव...तयोर्नैकस्वरूपत्वमित्यवधेयम् ।

पु०—पितः ! यदुक्त प्राक् वेदनिरूपणावसरे मीमांसकादिदार्शनिकनये शब्दस्य नित्यत्व, नैयायिकादिदार्शनिकनये च तस्यानित्यत्वमिति साम्प्रत तदुभयमतप्रदर्शनेन मा कृतार्थीकुर्वन्त्विति ।

पि०—वत्स ! भवत्वत्र प्रथम शब्दनित्यत्ववादिमीमांसकादिमतं प्रदर्श्य पश्चाच्छब्दानित्यत्ववादिना नैयायिकाना मत प्रकटयिष्यते । यद्यत्र प्रथम केनचिदुक्तम्य शब्दस्य कर्मान्यस्य नित्यत्व च माङ्गीक्रियताम् । शब्दे कर्मणि चाशुविनाशित्वरूपसाधर्म्यसत्त्वादिति । तन्न । मीमांसकनयेऽनेकपदार्थैः सह भावत्वसत्त्वादिपदार्थाना साधर्म्यसत्त्वेऽपि भावत्वादिपदार्थ तदितरपदार्थसाधर्म्यवत्तत्पदार्थाना च तेषा परस्परैक्याभाववच्छब्दाना कर्मणा च परस्परमाशुविनाशित्वरूपसाधर्म्यसत्त्वेऽपि तदुभयोरैक्यासम्भवात् । नैव साधर्म्यस्याभेदसम्पादकत्वमस्ति । वैधर्म्याभावस्यैवाभेदसम्पादकत्वाङ्गीकारात् । न च शब्दकर्मणोरैक्य सम्भवति । तन्मते शब्दाना नित्यत्वात्कर्मणा चानित्यत्वादिति तेषामभिप्राय । एतन्मत वैशेषिका न सहन्ते । शब्दाना नित्यत्वे तेषा निरन्तरश्रवणप्रसङ्गात् । यद्यत्र पुन केनापि वक्तव्यमन्धकारमयगृहादिगतघटपटादिवद्वस्तूनामप्रत्यक्षत्वेऽपि तदभिव्यञ्जकालोकादिना तत्तत्पदार्थप्रत्यक्षवद्विद्यमानानामपि शब्दानामुच्चारणाद्यभिव्यञ्जकाभावेन ते नैव श्रूयन्त, किन्तु सत्युच्चारणादिरूपाभिव्यञ्जके तेऽवश्य श्रूयेरन्निति । तन्न । दृष्टान्तस्थे व्यङ्ग्यघटपटादिवस्तुभि सहालोकादिव्यञ्जकवस्तूनां परस्परव्यङ्ग्यव्यञ्जकभावसम्बन्धसद्भाववद्दार्ष्टान्तिकस्थे शब्दतदुच्चारणयोरपि परस्परव्यङ्ग्यव्यञ्जकभावसम्बन्धसद्भावापत्ते । न च शब्दतदुच्चारणयो परस्परं तादृशसम्बन्धस्तिष्ठति । अन्धकाराद्यावृतस्थानगतघटपटादिपदार्थसंदर्शनेन तदानीं प्रदीपाद्यभिव्यञ्जकपदार्थानुमानवद्वाक्यध्वन्यादिशब्दश्रवणे

नोच्चारयितृवादयितृाद्यभिव्यञ्जकपदार्थानामननुमानात्। कारणसापेक्षवस्तु-मात्रस्यानित्यत्वमेव। शब्देषूच्चनीचभावेनोच्चरितेषूच्चनीचशब्दानुभवो लोकसिद्ध इति शब्दानां कार्यकारणभावोऽवश्यं स्वीकर्त्तव्यः। कारण-भेदमन्तरेण कार्यभेदादर्शनात्। वर्णात्मकशब्दानां प्रत्युच्चारणस्यैव कारण-त्वम्। उच्चारणं तूच्चारयितृप्रयत्नविशेष एव। उच्चारणेन प्रथमं यन्त्रगत-चेष्टा स्पन्दते। प्राणिगतवायुप्रधानतादृशस्पन्दनस्यैव तादृशवाय्वाकाशो-भयसंयोगे कारणता। उच्चारणद्वारैव कण्ठताल्वाद्याघातप्राप्तवायुराकाशेन सह संयुज्यते। तादृशसंयोग एव वर्णात्मकशब्दानामसमवायिकारणं भवति। उच्चारणतारतम्येन संयोगतारतम्यं संयोगतारतम्येन च शब्दतार-तम्यं घन्ते। उच्चारणस्यैव शब्दकारणत्वमङ्गीकर्त्तव्यम्। अन्यथोच्चारण-तारतम्यजन्यशब्दगतोच्चनीचताया अप्रत्यक्षत्वापत्तेः।

पु०—पितः! शब्दानां निरन्तरं श्रावणप्रत्यक्षं न भवतीति तेषां नित्यत्वापलपनमयुक्तम्। शब्दप्रत्यक्षदशायां तदानीं शब्दास्तित्वस्य, श्रवणेन्द्रियसंयोगस्य, श्रवणेन सह शब्दसम्बन्धस्य, स्वत्वादृष्टादेश्च कारण-त्वेनाभिमततया प्रोक्तकारणकूटान्यतमाभावे तत्प्रत्यक्षाभावात्।

पि०—वत्स! न चैवं वक्तुं युज्यते। शब्दप्रत्यक्षविषये वैशेषिक-मतानुकूलेऽपि त्वदुक्तकारणकूटे तत्र शब्दस्यापि कारणत्वेन "प्रत्येककारणा-सत्त्वे कार्यानुत्पत्ति"रिति नियममाश्रित्य शब्दनित्यत्ववादिनये सदा तदस्ति-त्वप्रसङ्गात्। तदानीमन्यान्यकारणकलापसत्त्वेऽपि ककारस्य खकारस्य वा श्रावणप्रत्यक्षदशायां सदितरसकलवर्णानामपि प्रत्यक्षत्वापत्तेश्च। तदसम्भ-वात्तेषामनित्यत्वमेवेति निर्णयम्।

पु०—पितः! यदुक्तं प्राग् भवद्भिर्मीमांसकनये 'अन्धकाराद्यावृत-स्थानगतघटपटादिपदार्थप्रत्यक्षं प्रत्यालोकस्योद्बोधकत्ववच्छब्दप्रत्यक्षं प्रत्यु-

चारणस्योद्बोधकत्वमात्रमेवेति, तत्राह, विवदिषाम्यस्तु वा शब्दप्रत्यक्षं प्रत्युच्चारणस्य कारणता, किन्तु न शब्दं प्रतीति।

पि०—वत्स! न चैवं वक्तुं शक्यते। वक्ष्यमाणयुक्त्या तन्निराकरणात्। तथाह्येकैकैकदेकेन्द्रियगृहीतनानापदार्थप्रत्यक्षं प्रत्यालोकस्येव प्रत्येकस्यापरवस्तुनोऽपि कारणता परिदृश्यते। यत्समये एकत्र घगे विद्यते तत्समये घटन सहालोकसयोगे जायमाने चक्षुरिन्द्रियेतरकारणान्तरमनपेक्ष्यैव घटनिष्ठरूपसङ्ख्यापरिमाणादिसकलपदार्थस्य चक्षुरिन्द्रियेणैव प्रत्यक्षयोग्यत्ववच्छ्रवणेन्द्रियग्राह्याविनाशिशब्दस्यैकत्रैकसमये वागिन्द्रियोच्चारणविस्तृतस्य सतोऽकारादिक्रमेण यस्य कस्याप्येकवर्णस्योच्चारणेनान्यान्यकारणमनपेक्ष्यैव श्रूयेत, किन्तु तथा न श्रूयते। शब्दप्रत्यक्षं प्रत्येकस्याभिव्यञ्जकत्वाङ्गीकारे प्रत्यक्षापलापेन मीमांसकमतमयाह्यमेव। क्वचित्संयोगविभागजन्यशब्देभ्योऽपि शब्दान्तरोत्पत्तिं परिदृश्यते। तालमारणेन हस्तद्वयसंयोगाद्वल्लादिपदार्थद्विदलकरणेन च मिलितसूत्रविविभागादेकस्थानोत्पन्नशब्दात् 'वीचीतरङ्गन्यायेन' 'कदम्बमुकुलन्यायेन' वा क्रमशो जायमानसजातीयशब्दान्तरमुत्पद्य कर्णकुहरस्याकाशे सतस्समानजातीयशब्दोत्पत्तिदर्शनात्। कर्णकुहरजन्यशब्दस्य तादृशशब्दजन्यत्वेनानित्यत्वमेव।

पु०—पितर! तादृशशब्दं प्रति प्रोक्तसंयोगविभागयो कारणत्वं मया नाङ्गीकर्त्तव्यम्। अभिव्यञ्जकत्वमात्रं प्रकाशकत्वमात्रं वेत्यङ्गीकारेणैव कार्यसिद्धेः।

पि०—वत्स! न तयोस्तत्राभिव्यञ्जकत्वं प्रकाशकत्वं वा शङ्कनीयम्। तालादिभ्योऽप्यकारादिवर्णसमूहोत्पत्तिप्रसङ्गात्।

पु०—महोदया! अस्तु वा ध्वन्यात्मकशब्दानां संयोगादिजन्य-

त्वेनानित्यत्व, किन्तु वर्णात्मकशब्दाना नित्यत्वमेव। कण्ठताल्वादि-संयोगादीना तत्राभिव्यञ्जकत्वमाङ्गीकारेणैव कार्यसिद्धे ।

पि०—वत्स ! न चैव वक्तु शक्यते। शब्दानां निरन्तराश्रूयमाणत्वेन, कण्ठताल्वादीनामुत्पत्तिविनाशवत्तेषामप्युत्पत्तिविनाशदर्शनन च ध्वन्यात्मकशब्दानामिव तत्कारणजन्यवर्णात्मकशब्दानामप्यनित्यत्वाङ्गीकारात्। श्रवणेन्द्रियग्राह्यशब्दमात्रस्यानित्यत्वमेव। घटादिवाद्यस्वना मासकारादिवर्णाना चानित्यत्वदर्शनात्।

पु०—महोदया ! एव सति मीमासकादिदार्शनिकनये शब्दनित्यत्वाङ्गीकरणमनुचितम्। तत्र विनिगमनाविरहात्।

पि०—वत्स ! न चैव वक्तु युज्यते। सम्मतेऽपि वक्ष्यमाणयुक्तिसन्दर्शनात्। तथा हि 'गुरु शिष्याय विद्या प्रददाती'त्युक्तौ विद्यापदेनाऽकारादिवर्णसमूहो गृहीतो भवति। तथा सति यद्वस्तु यदन्तिके न तिष्ठेत् स तद्वस्तु कस्मैचिज्जनाय दातु न पारयेत। अविद्यमानवस्तुप्रदाने प्रवृत्त्यसम्भवात्। वर्णसमूहस्यानित्यत्वाङ्गीकारे दानकाले गुरुसविधे तस्याविद्यमानतया शिष्याय तद्दानासम्भवेन शिष्यात्मकग्रहीता तदन्तिक कथमपि नागच्छेत्। शब्दस्य नित्यत्वेन तस्य सदानी गुरुनिकटे विद्यमानतया तदन्तिके समुपस्थिते शिष्येऽसौ तस्मै विद्या प्रददातीति निर्णयम्। किञ्च वर्णानामनित्यत्वाङ्गीकारे "त्रि प्रथमामन्वाह त्रिरुत्तमा"मित्याकारकश्रुतिप्रतिपादितत्रिवारपठनमप्यसङ्गत स्यात्। पुन पुन पठनमन्तरेण त्रिवारपठनासम्भवात्। प्रथमामुत्तमा च ऋच वारत्रय पठेदिति प्रोक्तश्रुत्यभिप्राय। अर्थवशेन नियताक्षरपादयुक्तवेदांश ऋक। अन्यच्च 'साम्प्रत तच्छ्लोकस्यैव पाठ श्रूयत' इत्याद्यात्मकप्रत्यभिज्ञापि न स्यात्। वर्णसमूहात्मकश्लोकस्यानित्यत्वे 'सोऽयं श्लोक' इत्याकारकप्रत्यभिज्ञा-

सम्भवात्। अतः शब्दस्य नित्यत्वमेव। यद्यत्र केनचिदुक्तत्र्यमकारादिवर्णसमूहस्य बहुत्वमादायोच्चारणभेदसन्दर्शनेन तस्यानित्यत्वमेवेति। तन्न। तस्य बहुत्वेऽपि श्रुत्युक्तस्य 'एवमध्ययनं वारं वारं कुरु' इत्याकारकव्यवहारस्य 'सोऽय'मित्याकारकप्रत्यभिज्ञायाश्चोच्छेदापत्तेः। किञ्च नृत्यशिक्षास्थलेऽपि गुरुशिष्ययोर्मध्ये परस्परसम्भाषणात्मकादानप्रश्ने, 'पुरा यादृशनृत्यगीतादिकमाचरितवानिदानीमपि तादृशनृत्यगीतादिकं वारं वारं कुरु' इत्याकारकप्रत्यभिज्ञासूचकवाक्यमपि श्रुतौ परिदृश्यते। नृत्यं स्पन्दनविशेषस्तदेवानित्यम्। नृत्यस्यानित्यत्वेनापि तस्यैकजातीयत्वाभिप्रायेण तदानीं 'वारं वार'मित्याकारकव्यवहारस्तादृशप्रत्यभिज्ञा चाभवताम्। प्रतिग्रहरूपार्थेऽध्ययनस्य, दानरूपार्थे चाध्यापनस्यारोपमात्रमिति ज्ञेयम्। नृत्याध्ययनयोः समानजातीयहेतुसन्दर्शनेन नृत्यमादाय शब्दस्य नित्यत्वासिद्धेरुक्तहेतुव्यभिचारित्वं दृश्यते। अतस्तद्धेतुत्यागेन वक्ष्यमाणहेतुर्निर्दिश्यते, यथा—'पञ्चाशद्वर्णा' इत्याकारकव्यवहारः पञ्चाशत्स्वरूपजातिमादायैव भवति। यथा चेह पृथिव्यां घटपटवृक्षलतादिरूपेण बहुभेदपरिदर्शनेनापि पृथिवीत्वरूपजातिमादायैवैकत्वव्यवहारवदकारादिभेदेन वर्णगतबहुभेदपरिदर्शनाद्वर्णत्वरूपजातिमादायैव पञ्चाशद्वर्णव्यवहार इति मीमांसकाभिमतम्। एतन्मतं काणादा न सहन्ते। शब्दाः प्रथमक्षण उत्पन्न द्वितीयक्षणे स्थित्वा तृतीयक्षण एव तेषां विनाशदर्शनेन क्षणिकत्वाङ्गीकारात्। शब्दानां द्वितीयक्षणावस्थायित्वेन तत्क्षण एव शब्दान्तरमुत्पाद्य तृतीयक्षण एव ते विनश्यन्ति। ते चान्त्या अर्थाच्चरमशब्दस्य शब्दान्तरोत्पादनरूपकार्यकारित्वासत्त्वेन स्वीयद्वितीयक्षण एव नश्यन्ति। ते पुनः प्रादेशिका व्याप्यवृत्तयो वाऽपि भवन्ति। न चैषां कदाचिदपि व्याप्यवृत्तित्वं शङ्कनीयम्। आकाशस्यैकदेशे शब्दोत्पत्तिपरिदर्शनेनाप्यपरप्रदेशे तेषामनुत्पत्तिदर्शनात्।

पु०—महोदयाः ! तिष्ठत्वत्र शब्दविषयकविचारः, किन्तु साम्प्रतं बुद्धिस्वरूपनिर्णयेनानुगृहीतव्यः ।

पि०—वत्स ! चेतनसर्वविधव्यवहारासाधारणकारणं घटपटादि-यावद्विषयप्रकाशकगुणो वा बुद्धिः । सा द्विविधा । अनुभूतिस्मृतिभेदात् । तत्रानुभूतिरनुभवः स्मृतिश्च स्मरणमित्यर्थः । भावनाख्यसंस्कारमात्रजन्यज्ञानं स्मृतिः, स्मृतिभिन्नज्ञानं चानुभवः । पूर्वानुभवादेव स्मरणं जायते । कदाचित्प्रागस्माभिः किमपि वस्त्वनुभूतं, तदनुभवादेव समयविशेषेऽस्माकं कश्चित्संस्कारविशेषोऽर्थाद्भावना जागर्ति, तत्संस्कारबलेन च यदा कदाचिच्चक्षुरादीन्द्रियनैरपेक्ष्येणैव तद्वस्तुस्मरणोत्पत्त्या तस्याः संस्कारमात्रजन्यत्वमेवेत्यवधेयम् । प्रोक्तानुभवोऽपि द्विविधः । यथार्थायथार्थभेदात् । तत्र वस्तुस्वाभाविकस्थित्यवगाहनजन्यानुभवो यथार्थानुभवः । स च क्षयं घटः अयं पटश्चे'त्याद्यात्मकः । अत्र घटत्वरूपेण 'घट'इत्याकारकानुभवस्य पटत्वरूपेण च 'पट'इत्याकारकानुभवस्य याथार्थ्यात् । वस्तुस्वाभाविकस्थित्यवगाहनाजन्यानुभवोऽयथार्थानुभवः । असौ घटस्य पटत्वाकारेण, पटस्य च घटत्वाकारेणानुभवरूपः, शुक्तिकायां रजतत्वप्रकारकज्ञानमथवा रज्ज्वां सर्पत्वप्रकारकज्ञानमित्याकारकः । पुनरसौ यथार्थानुभवोऽपि चतुर्विधः, प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । एषां करणमपि चतुर्विधम् । प्रत्यक्षानुमानोपमानशब्दभेदात् । एते 'प्रमाण'मित्याख्ययाप्यभिहिता भवन्ति । तेषां प्रमाज्ञानकरणत्वात् । यथार्थानुभवस्य विविधदार्शनिकमतभेदेन विविधाकारता परिदृश्यते । तेषु तस्य 'प्रत्यक्षस्वरूपत्व'मिति चार्वाकाः, 'अनुमितिस्वरूपत्व'मिति कणादसुगतौ, 'उपमितिस्वरूपत्व'मिति केचन नैयायिकैकदेशिनः, 'अर्थापत्तिस्वरूपत्व'मिति 'प्रभाकरमतावलम्बिनो मीमांसकाः', 'अनुपलब्धिस्वरूपत्व'मिति कुमारिलभट्टमतावलम्बिनो

मीमांसका वेदान्तिनश्च। 'सम्भवैतिह्यान्यरूपत्व'मिति पौराणिकाश्चाङ्गीकुर्वन्ति। प्रत्यक्षादिलक्षणान्यग्रे निरूपयिष्यन्ते। अत्र केवलमर्थापत्त्यनुपलब्धिसम्भवैतिह्यानां स्वरूपं प्रकट्यते। यथा—'उपपाद्यानुपपत्तिज्ञानाधीनोपपादकत्वकल्पनमर्थापत्ति'। यथा 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्याकारकज्ञानानन्तरमुपपाद्यात्मकपीनत्वस्य भोजनमन्तराऽसम्भवेनाश्वोपपादकात्मक रात्रि भोजन-कल्पनात्तादृशकल्पनमेवार्थापत्ति प्रमाणम्। यत्राभावे कल्पितसम्बन्धाभावेन प्रत्यक्षासम्भवात्तत्राभावज्ञानार्थं प्रतियोगिज्ञानाभाव कल्पयित्वा तत्कल्पनाद्यदभावप्रतीति समुत्पद्यते तादृशप्रत्यक्षाभावात्मकप्रतीतिरेवानुपलब्धिप्रमाणम्। यत्र 'शतं ब्राह्मणा वर्त्तन्त'-इत्याकारकज्ञानानन्तरं 'शतं पञ्चाशत्संख्याघटित'मित्याकारकज्ञानात् 'शतसंख्यासु पञ्चाशदपि वर्त्तन्त' इत्याकारेण समुत्पन्नज्ञानमेव सम्भवानुभव। यत्र 'अस्मिन् वृक्षे गृहादौ वा ब्रह्मराक्षसभूतादयो वर्त्तन्ते' एवंविधाज्ञानमूलकवक्तृवाक्यात्पन्नज्ञानमेवैतिह्यानुभव। ऐतिह्यानुभवस्यास्य न शब्दप्रमाणान्तर्गतत्वम्, अनाप्तनोक्तत्वात्। 'असन्दिग्धवक्तृत्वमाप्तत्व'मित्याप्तलक्षणात्। आप्तोक्तिरेव शब्दप्रमाणान्तर्गता भवति। यथार्थानुभवयथार्थज्ञानप्रमाशब्दा एकपर्य्यायका। भ्रमायथार्थज्ञानसंशयशब्दाश्चाप्येकपर्य्यायशब्दा। यद्वस्तुनि यद्धर्म्मस्तिष्ठति तद्धर्म्मपुरस्कारेण तद्वस्तुबोधो यथार्थानुभवो, यद्वस्तुनि च यद्धर्म्मो न तिष्ठति तद्धर्म्मपुरस्कारेण तद्वस्तुबोधोऽयथार्थानुभव। एतदुभयोदाहरण प्राक् प्रदर्शितमेव। साम्प्रतमयथार्थानुभवपर्य्यायान्तरसंशयशब्दस्योदाहरण प्रदर्श्यते यथा—द्वावेव विरुद्धधर्म्मौ संशयस्य विषयौ भवत। प्राक् संशयादेकत्रैकाधिकरणे सति सम्भवे तद्धर्मद्वयास्तित्वज्ञाने तद्धर्मस्मरण भवति। तद्धर्मद्वयमध्यात्कस्यचिदेकस्यापरस्याप्यधर्मस्याप्रत्यक्षे जाते

प्रत्यक्षस्य चक्षुःसंयोगादितत्सकलसाधारणकारणसत्त्वे संशय उत्पद्यते। यथा दूरतः परिदृश्यमानस्थाणौ प्रतीयमानदण्डायमानत्वरूपधर्मस्य पुरुषेऽपि सम्भवात्तत्स्थाणौ 'अयं स्थाणुः पुरुषो वे'त्याकारकसन्देहो आगच्छति पुरुषस्य। तत्र स्थाणुत्वव्याप्यधर्मास्तु वृक्षत्वपत्रभग्नावशिष्टशाखादय एव। स्थाणुभिन्नवृक्षेषु तादृशशुष्कपत्राविशिष्टशाखास्यासत्त्वात्। यद्धर्मो यद्धर्मापेक्षयाल्पदेशवृत्तिः समदेशवृत्तिर्वा स तद्धर्मापेक्षया व्याप्यधर्मः। संशयोत्पन्नधर्मद्वयमेव 'कोटिरि'ति दार्शनिका निगदन्ति। अत्र स्थाणुः स्थाणुत्व स्थाणुत्वाभावरूपकोटिद्वयं 'वस्तुधर्मौ'स्यपि वदन्ति। स्थाणुनिकटं गतवतः पुरुषस्य स्थाणुत्वबोधकशुष्कपत्रशाखादिचिह्नसद्दर्शनेन सद्यः तादृशव्याप्यधर्मदर्शने तथाविधसंशयो विनश्यत्येव। यथा यत्र केनापि रूपेण कोटिद्वयविषयकज्ञाने धर्मिविषयकज्ञानसत्त्वे व्याप्यधर्मो न दृश्यते। आलोकादिसाधारणकारणानां भ्रमकारणानां च विद्यमानत्वेऽपि संशयः समुत्पद्यत एव। स्थाणुत्व स्थाणुत्वाभावरूपोभयधर्मसमानाधिकरणं दण्डायमानावस्थाया एव धर्मद्वयस्य संशयकोटिद्वयस्य वा स्मारकत्वेन तस्या धर्मिज्ञानत्वरूपतया च तस्याः संशयं प्रति कारणत्वं, नान्यथा। असौ संशयो द्विविधः। बहिरान्तर्विषयकभेदात्। तत्र बहिर्विषयकसंशयः कारणभेदमादाय द्विधा समुत्पद्यते। तत्र प्रथमबहिर्विषयकसंशयोत्पत्तिप्रकारो यथा—एकाधिकस्थानेषु यस्मिन् कस्मिंश्चिदेकस्मिन् धर्मे कोटिद्वयसामानाधिकरण्यज्ञाने जायमाने तत्पश्चात्समुत्पन्नसंशयः एवैकविधबहिर्विषयकसंशयः। यथा कश्चिद्द्रष्टा प्रथममेकस्मिन् स्थले दण्डायमानावस्थाया स्थाणुत्वस्य च सामानाधिकरण्यस्यापरत्र च तदुभयाभावसामानाधिकरण्यस्य दर्शनात्प्रागपि स्थाणौ पुरुषस्य च दण्डायमानावस्थामवलोकितवान्। यदासौ कदाचिद्दूरतः स्थाणुं पश्यति तदानीमुभयत्र तादृशोभयावस्थाज्ञानवतस्तस्यैव 'अयं स्थाणु

पुरुषो न' इति संशयोत्पत्तेरितोऽवगम्यते 'एकाधिकस्थानेषु कोटिद्वय-सामानाधिकरण्यबोधानन्तरं दूरस्थवस्तुगततादृशभावदर्शनादेव तथाविध-संशयोत्पत्ति'रिति। द्वितीयबहिर्विषयकसंशयोत्पत्तिप्रकारस्तु विभिन्न-समये कस्मिंश्चिदेकस्मिन् धर्मे ज्ञानमूलकधर्मद्वयसामानाधिकरण्यज्ञाने समुत्पन्ने तदानीं संशयः समुत्पद्यतेऽसौ द्वितीयबहिर्विषयकसंशयः। यथा—जटाकमण्डल्वादिधारी कश्चिदेको महापुरुषः सकृन्मात्रं तुभ्यं दर्शनं प्रदाय स्थानान्तरं गत्वा पुनः कियत्कालानन्तरं जटाकमण्डल्वादिरहित स्त्वदन्तिकं समागतः। तद्दर्शनेनावश्यं तव 'योऽसौ महापुरुष इतः प्राक् मह्यं दर्शनं दत्त्वा गतवानसावेवायं महात्मा भवेत्? न वे'त्याकारक-संशयः समुत्पत्स्यत एव। अत्र जटाकमण्डल्वादिचिह्नराहित्यादित्यन्ते एकाधिकस्थाने जटाद्यभावस्य साधुत्वस्य च सामानाधिकरण्येऽगृहीते-ऽप्येकस्मिन्नेव साधौ विभिन्नसमये कमण्डल्वाद्यभावसाधुत्वयोः सामानाधि-करण्यसन्दर्शनादेवायं द्वितीयबहिर्विषयकसंशय इति ज्ञेयम्। आन्तर्विषयक-संशयो यथा अन्तः आन्तरज्ञानमेव विषयो यस्य स इत्याकारकबहुव्रीहि-समासोत्तर'क'प्रत्ययेन आन्तर्विषयकपदसिद्धिः। तथाहि प्रथमं लोकस्य बहिर्विषयकज्ञानं समुत्पन्नं, प्रमाज्ञानेऽपि यदा यस्य 'एतज्ज्ञानं यथार्थं न वे'त्याकारकभ्रमो वा सञ्जायते तादृशभ्रम एवान्तर्विषयकसंशयः। कोटिद्वय-समानाधिकरणज्ञायमानरूपधर्मस्यात्र ज्ञानात्मकधर्मिणि सुखदुःखादिरूप-धर्मिणि च परिलक्षिततया अयमान्तर्विषयकसंशय इति निगदन्ति।

पु०—महोदय! भवतु तर्हि, साम्प्रतं प्रागुक्तप्रत्यक्षस्वरूपनिरूपणे-

नानुग्राह्यः।

पि०—वत्स! 'विषयेन्द्रियसन्निकर्षजन्यज्ञानं प्रत्यक्षम्'। सन्निकर्षः-संयोग इत्यर्थः। घटपटादयो हि विषयाश्चक्षुरादीनि चेन्द्रियाणि।

येनेन्द्रियेण यद्वस्तु प्रत्यक्षं भवति तदिन्द्रियस्य तद्वस्त्वेव विषयस्तदिन्द्रियं च तद्वस्तुनो विषयि। तथा सति चक्षुषा घटप्रत्यक्षे विषयो घटो विषयि च चक्षु। तदुभयसंयोगेनैव 'घटमहं पश्यामी'त्याकारकज्ञानस्य समुत्पन्नत्वात् तादृशज्ञानं चाक्षुषप्रत्यक्षमिति वदन्ति। इत्थं त्वाचादिसर्वविधप्रत्यक्षमवधेयम्। तच्च प्रत्यक्षं द्विविधम्। सविकल्पकनिर्विकल्पकभेदात्। तत्र विशेषणविशेष्योभयपदार्थावगाहिज्ञानं सविकल्पकज्ञानम्। तथाहि 'घट'इत्याकारकज्ञानं घटो विशेष्यं, घटत्वं च विशेषणम्। तथाविधज्ञाने घटघटत्वयोः विशेष्यविशेषणाकारेण गृहीततया तादृशज्ञानमेव सविकल्पकज्ञानमिति वदन्ति। यच्च ज्ञानं कालसापेक्ष्येण पृथक्पृथगाकारेण विशेष्यविशेषणसम्बन्धान् सर्वान् गृहीत्वा युगपदेव पुनस्तान् सर्वान् गृह्णाति तज्ज्ञानमेव निर्विकल्पकज्ञानम्। किं वा 'विशेष्यविशेषणसम्बन्धानवगाहिज्ञानं निर्विकल्पकज्ञानम्। तथाहि घटपटादिसकलविषयकसविकल्पकप्रत्यक्षे घटपटादिकं विशेष्यं, घटत्वपटत्वादिकं विशेषणं, समवायादिकं च सम्बन्धः। एषां चाक्षुषप्रत्यक्षस्थले घटपटादिभिः सह सति चक्षुःसंयोगे तदानीं यथाक्रमं घटादेः पश्चात्तन्निष्ठघटत्वादेस्ततपश्चाच्च तदुभयनिष्ठसमवायादिसम्बन्धस्य प्रत्यक्षं भवति। निर्विकल्पकज्ञाने तु तथा न भवति। विषयेन्द्रियसंयोगमात्रेण युगपदेव घटघटत्वतदुभयगतसम्बन्धानां ग्रहणात्। न च निर्विकल्पकज्ञानमपलपितव्यम्। विशेषणज्ञानमन्तरेण विशिष्टज्ञानाभावात्। शुक्लरूपज्ञानाभावे 'शुक्लः पट'इत्याकारकज्ञानं न सम्भवति। 'शुक्लः पट'इत्याकारकज्ञानमेव विशिष्टबुद्धिः। अत्र ज्ञाने शुक्लनीलरूपादीनि विशेषणानि पटादिद्रव्याणि च विशेष्याणि। 'घट'इत्याकारकविशिष्टबुद्धौ घटो विशेष्यं घटत्वं च विशेषणम्। एतज्ज्ञाने प्रथमं घटत्वज्ञानसत्त्वे 'घट'इत्याकारकज्ञानसम्भवादेवेन्द्रियार्थसन्निकर्षा-

नन्तरमतीन्द्रियनिर्विकल्पकज्ञानमङ्गीकृतम्। तच्च घटत्वज्ञानस्वरूपम्। तत्पश्चाद्यद्घटप्रत्यक्षं भवति तदेव सविकल्पकज्ञानम्। विशिष्टस्य विशिष्टबुद्धौ अर्थाज्ज्ञानस्य विशेषणांशे विशेषणत्वे यज्ज्ञानं भवति तज्ज्ञानमेव विशिष्टवैशिष्ट्यावगाहिज्ञानम्। तथाहि 'शुक्लवस्त्रधारी पुरुष'इत्याकारकज्ञाने शुक्लवस्त्रं विशेषणम्। एतद्विशेषणीभूतवस्त्रांशे शुक्लत्ववस्त्रत्वयोरविशेषणत्वेन तज्ज्ञानमेव विशिष्टवैशिष्ट्यावगाहिज्ञानम्। एतज्ज्ञानं प्रति विशिष्टज्ञानस्यार्थाच्छुक्लवस्त्रज्ञानस्यैव कारणत्वं ज्ञेयम्। निर्विकल्पकज्ञानसाधकानुमानमपि परिहरयते। यथा—'घट'इत्याकारकं विशिष्टज्ञानं, विशेष्यज्ञानं वा विशेषणज्ञानजन्यं भवितुमर्हति, विशिष्टबुद्धित्वात् 'दण्डी' त्याकारकज्ञानवदिति। न च 'दण्डी'त्याकारकज्ञानस्य सविकल्पकज्ञानस्वरूपत्वमङ्गीकर्त्तव्यम्। तस्य विशेषणं, तद्विशेषणस्यापि विशेषण'मित्याद्याकारेणापेक्षमाणतयानवस्थादोषभिया स्वातन्त्र्येण निर्विकल्पकज्ञानाङ्गीकारात्। अनवस्था नाम पुन पुनराकांक्षा, पुन'पुनरपेक्षा वा। प्रत्यक्षकारणीभूतपूर्वोक्तेन्द्रियार्थसन्निकर्षोऽपि षड्विधः। संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवायविशेषणविशेष्यभावभेदात्। 'इन्द्रियार्थसन्निकर्ष'इत्यत्र चक्षुरादीनीन्द्रियाणि, अर्थो घटपटादिरूपो विषयः, सन्निकर्षश्च समवायादिसम्बन्धरूप इत्यर्थः। तेषु घटप्रत्यक्षे संयोग एव सन्निकर्षः। तत्र घटेन सह चक्षु'संयोगेनैव तत्प्रत्यक्षोत्पत्तेः। घटरूपप्रत्यक्षे सयुक्तसमवायः सन्निकर्षः। तत्र चक्षु सयुक्तघटे तद्गतरूपस्य समवायसम्बन्धेनैव वृत्तेः। घटगतरूपनिष्ठरूपत्वात्मकजातिप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। तत्र चक्षु सयुक्तघटे तद्गतरूपस्य समवायसम्बन्धेन, घटगतरूपे च सन्निष्ठरूपत्वरूपजातेरपि समवायसम्बन्धेन वृत्तेः। [illegible]वायः सन्निकर्षः। श्रवणेन्द्रियावच्छिन्नाकाशे शब्दस्य

समवायसम्बन्धेनैव वृत्ते । शब्दत्वरूपजातिसाक्षात्कारे समवेतसमवाय एव सन्निकर्षः । तत्राकाशविशेषगुणशब्दस्य श्रोत्रशब्दवाच्यकर्णविवरवर्त्याकाशे समवायसम्बन्धेन, तथाविधशब्दात्मकगुणेऽपि शब्दत्वरूपजातेश्च समवायसम्बन्धेन वृत्ते । अभावप्रत्यक्षे च विशेषणविशेष्यभावः सन्निकर्षः । 'घटाभाववद्भूतल'मित्यादौ चक्षुःसंयुक्तभूतलात्मकविशेष्ये घटाभावात्मकविशेषणस्य विशेषणविशेष्यतात्मकसम्बन्धेन वृत्ते । विषयैः सहेन्द्रियसम्बन्धः सन्निकर्षः, विशेषणविशेष्यभावश्च स्वरूपसम्बन्धविशेष इत्यथ । स्थलविशेषमादायास्य सम्बन्धस्य नानात्वमपि दृश्यते । तत्प्रत्यक्षमपि द्विविधम् । लौकिकालौकिकभेदात् । तत्र लौकिकप्रत्यक्षं तत्प्रत्यक्षस्य च सन्निकर्षषाड्विध्यमपि प्रदर्शितम् । अथालौकिकप्रत्यक्षं प्रदर्श्यते यथा—तच्च प्रत्यक्षं त्रिविधम् । सामान्यलक्षणाज्ञानलक्षणायोगजधर्मभेदात् । तत्र यदा यत्र कस्मिंश्चिदेकस्मिन् घटादिद्रव्ये चक्षुषा त्वचा वा घटत्वादिजातिप्रत्यक्षण एव तद्घटत्वादिप्रकारेण सन्निकृष्टविप्रकृष्टातीतानागतसाधारणसकलघटादीनां यदेकविधज्ञानं समुत्पद्यते तज्ज्ञानमेव सामान्यलक्षणाप्रत्यासत्तिजन्यालौकिकप्रत्यक्षम् । सन्निकर्षस्य पर्यायान्तरशब्दः प्रत्यासत्तिः । तत्प्रत्यक्षे घटत्वादिजातिज्ञानमेव व्यापारः । तज्जातिज्ञानं येनेन्द्रियेणाभूत्तदिन्द्रियमेव तज्जात्याश्रयघटपटादिसकलविषयकालौकिकप्रत्यक्षं प्रति कारणं भवति । चक्षुषालौकिकप्रत्यक्षे त्वालोकस्यापेक्षा तिष्ठत्येव । तदनङ्गीकारेऽन्धकारगृहादिगतघटपटादिवस्तूनामपि चाक्षुषप्रत्यक्षविषयत्वापत्तेः । यत्र प्राग् यस्य यद्विषयकज्ञानमभूत्तज्ज्ञानबलेन पश्चाद्यदा कदाचित्तत्तद्विषयकलौकिकप्रत्यक्षसन्निकर्षाभावेऽपि हठात्तत्तद्विषयकज्ञानं समुत्पद्यते तज्ज्ञानमेव ज्ञानलक्षणाप्रत्यासत्तिजन्यालौकिकप्रत्यक्षम् । यथा—चन्दनादिष्वभियुक्तवस्तुनि कदाचिद्घ्राणसंयुक्तसमवायेनार्थालौकिक-

सन्निकर्षेण सौरभोपलब्ध्यनन्तरं कियद्दूरे कस्यचिद्धस्तगतचन्दनखण्डादि-द्रव्यदर्शनमात्रेणैव हठात् 'इदं चन्दनादिकं सुरभियुक्तवस्त्वि'त्याकारकज्ञानं यत्समुत्पद्यते, तदानीमवश्यं चन्दनखण्डादौ चक्षुःसंयोगात्मकलौकिक-सन्निकर्षसत्त्वेऽपि तत्सौरभे चक्षुर्ग्राह्यता, घ्राणसंयुक्तसमवायसन्निकर्षो वा न सम्भवति। तत्पूर्वं तत्र तद्घ्राणजलौकिकसौरभज्ञानस्य घ्राणजसन्निकर्षो-त्पादकत्वात्पूर्वोक्तसौरभस्यालौकिकप्रत्यक्षज्ञानजन्यत्वाङ्गीकाराच्च। यत्तु-तत्तु पूर्वानुभूतिवशेनैव तदानीं चन्दनखण्डादिदर्शनमात्रादेव सौरभ-स्मरणात्तत्स्मरणमेव। चाक्षुषप्रत्यक्षविषयीभूतचन्दनखण्डादिदर्शनमात्रेणैव सौरभांशे तदानीमुपनीतभानमयोऽलौकिकज्ञानं मिथ्यतीत्येकस्मिन् ज्ञाने लौकिकत्वालौकिकत्वोभयविधधर्मावाभेदस्य विभिन्नांशे विद्यमानता निर्बाधैव। किञ्च शर्करातिन्तिड्यादिपदार्थदर्शनेन 'शर्करा मधुरा' 'तिन्तिडी चाम्ले'-त्यादिज्ञानस्यांशेऽपि लौकिकत्वालौकिकत्वोभयधर्मदर्शनात्तादृशान्यत्वमपि सम्मेलनोदाहरणमप्यज्ञान्तर्गतमिति ज्ञेयम्। योगजधर्मालौकिकप्रत्यक्ष-निरूपणात्प्राक् सुखबोधाय योगिनां भेदः प्रदर्श्यते, यथा—योगी द्विविधः, युक्तयुञ्जानभेदात्। तदुभयोर्धर्मोऽप्यलौकिकमपि द्विविधः। युक्तयोगज-युञ्जानयोगजभेदात्। तत्र साधनमन्तरेणापि युक्तयोगिनः सदा सकल-विषयकालौकिकमानसप्रत्यक्षं भवति, युञ्जानयोगिनश्च समाधिनिष्ठत्वे सकलविषयकज्ञानं भवति नान्यथा। योगजधर्मपदेन मनसः प्रत्यासत्ति-र्योग्यसम्बन्धः। अतो योगजदर्शनं मानसमेव। तादृशप्रत्यक्षे मन एव कारणम्। सर्वविषयगोचरतया योगजस्यैव वैशिष्ट्याद्भवेनातीतानागत-वर्तमानव्यवहितपरमाणुप्रभृतिसकलविषयस्तु मानसालौकिकप्रत्यक्षं याथार्थ्येन योगिनः सम्पद्यते। ज्ञानलक्षणाप्रत्यासत्तिस्तु मानसव्यापाररूपा। अतस्तदलौकिकविषयसम्पर्केऽप्यलौकिकांशे मानसम्बन्धीकारेण लौकिका-

लौकिकोभयविधप्रत्यक्षे प्रतीन्द्रियमेव कारणम्। प्रत्यक्षप्रमाणपदेनात्र षण्णामेवेन्द्रियाणां ग्रहणम्। सर्वत्र द्रव्यप्रत्यक्षे संयोग एव सन्निकर्षः। प्रथममात्ममनःसंयोगस्ततो मनस इन्द्रियेण सह संयोगस्ततः इन्द्रियस्य विषयेण संयोगस्तदनन्तरं ज्ञानसमुत्पत्तिरिति सर्वत्र सकलविषयकज्ञानोत्पत्तौ नियमः। किन्तु ज्ञानोत्पत्तिक्षणे त्वगिन्द्रियेण सह मनःसंयोगस्यावश्यकता। त्वगिन्द्रियेण मनःसंयोगाभावे ज्ञानं कथमपि नोदियात्। एतदनङ्गीकारे सुषुप्त्यवस्थायामपि ज्ञानोत्पत्तिप्रसङ्गात्। तदवस्थायां त्वगिन्द्रियशून्यपुरीतन्नाडीमध्ये मनसो विद्यमानतया कथमपि किमपि ज्ञानं नोदेतीति दृष्टचरम्। सुषुप्त्यवस्थायां ज्ञानाभावं श्रुतिरपि प्रमाणयति। तथा चोक्तं माण्डूक्योपनिषत्पञ्चमानुवाके "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्त"मिति। यत्र यस्यामवस्थायां सुप्तो लोकः किमपि काम्यवस्तु न कामयते, किमपि स्वप्नं न पश्यति सैवावस्था सुषुप्तिरिति श्रुत्यर्थः। पूर्वोक्तदिशा ज्ञानोत्पत्तिविषयकनियमस्तु चाक्षुषादिषड्विधप्रत्यक्षे स्वीकार्य्यः। एवमनुमानोपमानशाब्दप्रमाणान्यपि प्रत्यक्षप्रमाणात्मकेन्द्रियस्यैव कार्य्याणीति ध्ययम्। प्रत्यक्षप्रमाणस्य तदितरसर्वप्रमाणज्यैष्ठ्यमङ्गीकर्त्तव्यम्। सर्वविधप्रमाणानामुपजीव्यत्वादर्थास्कारणत्वात्प्रथमप्रवृत्तत्वाच्च। पूर्वोक्तायथार्थानुभवोऽपि त्रिविधः। संशयविपर्ययतर्कभेदात्। तत्र 'एकस्मिन्नेव धर्मिणि परस्परविरुद्धधर्माणां विशेषणाकारमानमेव संशयः'। यथैकस्मिन् शाखापत्रादिरहितस्थाणुरूपधर्मिणि 'अयं स्थाणुः ? पुरुषो वे'त्याकारेण परस्परविरुद्धयोः स्थाणुत्वपुरुषत्वधर्मयोर्विशेषणाकारेण भानात्संशयः समुत्पद्यते लोकस्येति लक्षणसमन्वयः। विपर्ययत्वं नाम मिथ्याज्ञानत्वम्। यथा शुक्तिकायाम् 'इदं रजत'मित्याकारकं ज्ञानम्। तत्र शुक्तिकायां

रजतत्वप्रकारकज्ञानस्य मिथ्यात्वेन प्रतीतेः । व्याप्यारोपाधीनव्यापकारोपस्तर्कः । यदपेक्षया यस्याल्पदेशवृत्तित्वं तिष्ठति तदभावस्य तदपेक्षया बहुदेशवृत्तित्वेन व्यापकत्वं, यदपेक्षया च यस्य बहुदेशवृत्तित्वमस्ति तदपेक्षया तदभावस्याल्पदेशवृत्तित्वेन व्याप्यत्वमवधेयम् । यथा 'वह्निमान् धूमा'दित्यादौ वह्नेर्महानसगोष्ठचत्वरायोगोलकपर्वतात्मकस्थानपञ्चकेषु, धूमस्य चायोगोलकातिरिक्तप्रोक्तस्थानचतुष्टयेषु विद्यमानत्वेन वह्न्यभावापेक्षया धूमाभावस्य व्यापकत्वं, धूमाभावापेक्षया च वह्न्यभावस्य व्याप्यत्वम् । तथा सति 'यद्यत्र वह्निर्न स्यात्तर्हि धूमोऽपि न स्या'दित्युक्तौ तत्र वह्न्यभावात्मकव्याप्यपदार्थेन सह धूमाभावात्मकव्यापकपदार्थस्यारोपात्तर्कलक्षणसमन्वयः । आरोपो नामान्यस्मिन्नन्यधर्मावभासः । शुक्तिकायां रजतज्ञानवत् । पूर्वोक्तस्मृतिरपि द्विविधा । यथार्थायथार्थभेदात् । तत्र प्रमाजन्यस्मृतिर्यथार्था, भ्रमजन्यस्मृतिश्चायथार्था । प्रत्यक्षादिकार्यनिष्पत्तये संयोगगुणात्मकव्यापारविशिष्टचक्षुरादीन्द्रियाणामेव करणत्वम् । तत्र करणत्वं नाम व्यापारवदसाधारणकारणत्वम् । व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम् । एतल्लक्षणघटिततत्पदद्वयेन चक्षुरादीन्द्रियपदार्थानां ग्रहणम् । तत्र चक्षुरादीन्द्रियजन्यप्रत्यक्षादिकार्यनिष्पत्तिं प्रति तत्तदिन्द्रियादिभिः सह घटपटादिविषयाणां संयोगादिरूपकार्यमेव व्यापारः । यो हि पदार्थः कारणजन्यो भूत्वा पुनस्तत्कारणजन्यकार्यनिष्पत्तिं प्रत्यपि कारणं भवति स एव व्यापार इति निष्कर्षः । तथा सति 'चक्षुषा घटं पश्यामि' 'कुठारेण काष्ठं छिनत्ति चे'त्यादौ चक्षुःकुठारयोः करणत्वं चक्षुर्घटोभयसंयोगः कुठारकाष्ठोभयसंयोगश्च व्यापारः । पूर्वोक्तव्यापाररहितचक्षुःकुठारयोः स्वस्वकार्यभूतवस्तुप्रत्यक्षद्वैधीकरणात्मककार्यनिष्पादकत्वासम्भवेन प्रत्यक्षद्वैधीकरणात्मककार्यनिष्पत्तये संयोगात्मकव्यापारविशिष्टानां

चक्षुरादीन्द्रियाणां कुठारादीनां चासाधारणकारणत्वेन तेषां करणत्वमेवेति निर्णयम् ।

पु०—महोदया ! तिष्ठतु तद्वार, साम्प्रतं सुखदुःखस्वरूपनिर्णयेनानुग्राह्य ।

पि०—वत्स ! प्राणिमात्रस्य प्रवृत्त्यनुकूलमेव सुखं, प्रवृत्तिप्रतिकूलं च दुःखम् । किं च धर्ममात्रासाधारणकारणगुणः सुखम् । अधर्ममात्रासाधारणकारणगुणो दुःखम् । धर्मात्सुखस्याधर्माच्च दुःखस्योत्पत्तः सुखेन सह धर्मस्य दुःखेन च सहाधर्मस्य परस्परकार्यकारणभावसत्त्वात् ।

पु०—महोदया ! अस्तु तर्हि, साम्प्रतमिच्छाद्वेषप्रयत्नानां स्वरूपं यथाक्रमं निरूपणीयम् ।

पि०—वत्स ! "नित्यं सुखे स्वसुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि" इत्युक्तप्रकारेण सुखादिज्ञाने तत्साधनत्वज्ञाने च जायमाने 'इदं मे भूया'दित्येवरूपात्मधर्मविशेष इच्छा । अनिष्टसाधनताज्ञानजन्यस्तत्प्रतिबन्धिचित्तवृत्तिभेदो द्वेषः । "प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारण"मित्युक्तत्रिविधयत्न एव प्रयत्नः । स च वैशेषिकादिनये आत्मगुणः सांख्यादीनां नये च बुद्धिधर्मः । तथाहि चिकीर्षां प्रति बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानस्यैव कारणता, प्रवृत्तिं प्रत्युपादानप्रत्यक्षस्य च कारणता । उपादानपदेनात्र समवायिकारणस्यैव ग्रहणम् । यद्विषये लोकः प्रवर्तते तस्य तद्विषयकपदार्थस्वरूपज्ञानमन्तरेण तत्र निवृत्त्यसम्भवात् द्वेषप्रयुक्तशत्रुताज्ञानमन्तरेण [redacted] तत्र निवृत्त्यसम्भवाच्च । जीवनयोनिप्रयत्नस्य च शरीरप्राणसञ्चारं प्रत्यर्थात्प्रबलश्वासप्रश्वासात्मकवायुसञ्चारं प्रति कारणता । नास्य प्रत्यक्षयोग्यत्वं सम्भवति । तस्यातीन्द्रियत्वात् । किञ्चेच्छाजन्यगुणः प्रवृत्तिर्द्वेषजन्यगुणो

निवृत्तिर्जीवनादृष्टजन्यगुणश्च जीवनयोनिरिति। प्रोक्तेच्छाद्वेषौ पुनः कथमुत्पद्येते इत्यपेक्षायामुच्यते। तयोरदृष्टफलजन्यत्वेन शरीरानुसारेणैव समुत्पत्ति। आजन्म कामिनीसुखमनुभवन पुरुषस्य यौवने विवाहसङ्कल्पाभावेऽपि विवाहेच्छायत्सर्पदशनदुःखमनुभवत सर्पद्वेषवज्जन्मदरिद्रव्यक्तेरिह जन्मनि धनसुखभोगाभावेऽपि धनप्राप्तीच्छायद्व्यक्तिविशेषस्य व्यक्तिविशेष प्रति निष्कारणप्रीतिद्वेषावुत्पद्येते एव। एतत्सर्वमदृष्टमूलकं पूर्वजन्मसस्कारमूलकं वेति ज्ञेयम्। एतदुभयं प्रत्यदृष्टस्य मनुष्यत्वादिजातिविशेषस्यापि कारणत्वमस्ति। मनुष्याणामन्नादौ, मृगादिचतुष्पदजीवानां घासादौ, ब्राह्मणादीनां घृतदुग्धादौ, हड्डिकादिम्लेच्छजातीनां च तण्डुलशाकादावनुरागस्य, घासादौ मनुष्याणामन्नादौ मृगादिचतुष्पदजीवविशेषाणां चेत्यादिक्रमेण द्वेषस्यापि दर्शनात्।

पु०—महोदयाः! भवतु तर्हि, साम्प्रत धर्माधर्मस्वरूपनिर्णयेनानुग्राह्यं।

पि०—वत्स! वेदादिशास्त्रविहितकर्मजन्यगुणो धर्मः। आदिपदेनागमस्मृतिपुराणादीनां ग्रहणम्। अधर्मेऽतिव्याप्तिवारणाय वेदादिशास्त्रविहितपदोपादानम्। यागादिक्रियायामतिव्याप्तिवारणाय कर्मजन्यपदोपादानम्। वेदादिशास्त्रनिषिद्धकर्मजन्यगुणोऽधर्मः। धर्मेऽतिव्याप्तिवारणाय वेदादिशास्त्रनिषिद्धपदोपादानम्। वेदादिशास्त्रनिषिद्धक्रियायामतिव्याप्तिवारणाय तादृशकर्मजन्यपदोपादानम्। अदृष्टाख्यावेतदुभौ विलक्षणसस्कारात्मकवासनाजन्यौ भवत। तौ हि जीवात्मनिष्ठगुणावेव। अनयोरदृष्टाख्यत्वमात्मनिष्ठत्वं च कुत इत्यपेक्षायामुच्यते—शास्त्रोक्तपापपुण्यकर्मजन्यसस्कारविशेष एवादृष्टम्। तादृशसस्कार आत्मलग्नस्तिष्ठति। इष्टमिष्टसाधन वा मुख्यगौणभेदेनास्य प्रयोजनमिति निगदन्ति। एतद्द्विविधप्रयोजनमपि द्विविधम्। दृष्टादृष्टभेदात्। तत्र प्राणिनोऽनुभूयमान

सुखं, सुखभोगो दुःखाभावो चैव दृष्टमुख्यप्रयोजनम्। सुखदुःखाभावहेतुभूतकृषिवाणिज्यादिकर्माण्येव दृष्टगौणप्रयोजनम्। एषां स्वरूपफलयोर्दृष्टिगोचरत्वेन दृष्टमुख्यगौणप्रयोजनत्वं, स्वर्गादेरात्यन्तिकदुःखाभावस्य चार्थाचरमदुःखनिवृत्तेः कस्याप्यप्रत्यक्षत्वेन तयोरदृष्टमुख्यप्रयोजनत्वं स्वर्गादिसाधनीभूतयज्ञतपस्यातत्त्वज्ञानादीनां च मुख्यप्रयोजनोद्देश्येनानुष्ठीयमानतया तेषां गौणादृष्टप्रयोजनत्वमवधेयम्। यद्यत्र केनापि प्रष्टव्यं चक्षुर्विषयीभूतयागयज्ञादिकर्मणां कथमदृष्टप्रयोजकत्वमिति। अत्रोच्यते—तत्तत्कर्मणि स्वरूपतो दृष्टिगोचरीभूतेऽपि तत्फलादर्शनेन तेषामदृष्टप्रयोजकत्वमेव। गङ्गास्नानोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नियमनक्षत्रनियममन्त्रनियमकालनियमादिकर्मणां दृष्टत्वेऽप्यनित्यतयाऽस्मभ्यदृष्टं समुत्पाद्य यथा तानि विनश्यन्ति तथैव तत्तत्कर्माण्यपीति ज्ञेयम्। तत्र गङ्गास्नानं गङ्गादितीर्थस्नानम्, उपवास एकादश्याद्युपवासः, ब्रह्मचर्यपालनपूर्वकं गुरुगृहे स्थित्वा वेदस्य स्वस्वशाखाध्ययनं समग्रवेदाध्ययनं वा ब्रह्मचर्यगुरुकुलवासः, गृहस्थाश्रमानन्तरं सस्त्रीकतया निस्त्रीकतया वा वनादौ वासो वानप्रस्थः, यज्ञो राजसूयवाजपेयादिरूपः, ब्राह्मणेभ्यो दरिद्रेभ्यो वाऽन्नवस्त्रादिवितरणं दानम्, वेदादिविहितप्रोक्षादिद्रव्यसंस्कारः प्रोक्षणम्, पूर्वाभिमुखेनोत्तराभिमुखेन वा यज्ञाद्यनुष्ठानं भोजनाद्यनुष्ठानं वा कर्तव्यमित्याकारकनियम एव दिङ्नियमः, 'शतभिषानक्षत्रयुक्तत्रयोदश्यां वारुणीयोगत्वेन सूर्यादिग्रहणफलवत्त्वेन च गङ्गादितीर्थेषु स्नाया'दित्याकारकनियम एव नक्षत्रनियमः, "आपो हि ष्ठा"दिमन्त्रस्नानमेव मन्त्रनियमः, 'शरत्कालादावेव दुर्गोत्सवपूजादिकं कुर्या'दित्याकारकनियम एव कालनियमः। एतत्सकलकर्मजातं चक्षुर्गोचरीभूतमप्यदृष्टोत्पत्तिपूर्वकं विनश्यदप्रत्यक्षीभूतधर्मस्य कारणं भवतीत्येतत्सकलस्यादृष्टप्रयोजकत्वं ज्ञेयम्।

पु०—महोदया ! प्रोक्तकर्मणामदृष्टफलवत्त्वं मया नाङ्गीकर्त्तव्यम्। चण्डीपाठादिकर्मणा विवादादौ जयलाभादिदृष्टफलस्य, पुत्रेष्ट्यादियज्ञाद्यनुष्ठानादिना च पुत्रलाभादिरूपदृष्टफलस्य चोत्पत्ते ।

पि०—वत्स ! न चैव वक्तुं युज्यते। दृष्टफलकानामपि चण्डीपाठादिकर्मणामासङ्कल्पदिनसमाप्त्यस्थायित्वेन फलोत्पत्तिदिवसपर्यन्तस्थायित्वाभावात्। कारणमन्तरेण कार्यानुत्पत्तेरवश्यमाफलोदयकालस्थायि तत्तत्कर्मजन्यमदृष्टाख्यं किमपि नित्यवस्तु कल्पनीयम्। अतस्तत्तत्कर्माण्यदृष्टप्रयोजनान्यदृष्टफलानि इति गण्यन्ते। परिशेषेऽयमस्मत्सिद्धान्तो यथत् कर्माणि धर्मसाधनानि भवन्ति तत्सकलानि गौणादृष्टप्रयोजनानि, स्वर्गमोक्षादयश्च मुख्यादृष्टप्रयोजनस्वरूपा इति। ब्रह्मचर्यगृहस्थवानप्रस्थसन्न्यासभेदेनावस्थितमाश्रमचतुष्टयं तावदस्माकं धर्मसाधनीभूतं भवति। तत्तदाश्रमस्थानामुपधानुपधे आदाय पापपुण्यनिर्णयो भवति। उपधा अशुद्धिः, अनुपधा च शुद्धिरित्यर्थः । यो हि यदा यदाश्रमी भवेत्तदानीमसौ स्वस्वाश्रमोचितबाह्याभ्यन्तरशुद्धिमादायान्ते स्वर्गादिसुखभोगं, तदुभयगताशुद्धिं चादाय नरकादिदुःखभोगं लप्स्यत एवेति बोध्यम्।

पु०—महोदया ! पूर्वोक्तबाह्याभ्यन्तरशुद्धिप्रकार एष कीदृशः ?

पि०—वत्स ! शास्त्रोक्तरूपरसगन्धस्पर्शविशिष्टवस्तुजातं तावत्त्रिविधम्। प्रोक्षिताभ्युक्षितन्यायार्जितभेदात्। तत्र समन्त्रकजलसिक्तं प्रोक्षितम्, अमन्त्रकजलसिक्तमभ्युक्षितम्, यजनादिस्वस्वकर्मलब्धधनं च न्यायार्जितम्। ईदृशद्रव्यमेव शुद्धद्रव्यम्। यथा—"हैमन्तिकशुक्लधान्येन हविष्यं कुर्यात्" "स्वादूनि मधुराणि च" इत्यादिशास्त्रादवगम्यते हैमन्तिकशुक्लधान्येन हविष्यं कुर्यात्स्वाभाविकमधुररससम्पन्नफलं च खादेदिति। सुगन्धपुष्पादिना विष्णुं, बिल्वपत्रादिना च शिवं पूजयेत्।

ब्राह्मणाय सुकोमलशय्यानवस्त्रादिदानं च कुर्यात्। इत्यादिशास्त्रोक्तद्रव्याणि मन्त्रजलप्रोक्षितानि शुद्धजलाभ्युक्षितानि वा चेत्तर्हि शुद्धानि भवन्ति, नान्यथा। एतदनङ्गीकारे शास्त्रगर्हितम्लेच्छान्नमद्याद्यशुचिद्रव्याणामपि शुचित्वापत्ते। स्वाभाविकविशुद्धद्रव्याणामप्यशुचिद्रव्यान्तरमिलनेनाशुचित्वमायाति। यमनियमादिरहितपुरुषस्यासंयतपुरुषस्य वा शुचिभोजनादिकमपि नोपकारकमिति ज्ञयम्।

पु०—महोदया ! भवतु तर्हि, साम्प्रतं प्रोक्तयमनियमस्वरूपनिर्णये मानुग्राह्य।

पि०—वत्स ! अहिंसासत्यास्तेयब्रह्मचर्याप्रतिग्रहात्मको यम, शौचसन्तोषतपस्याशास्त्राध्ययनेश्वरोद्देश्यकसर्वकर्मसमर्पणात्मको नियमश्चेति। तत्र कायमनोवाक्यै परपीडनाभावोऽहिंसा, सत्यं याथार्थ्यम्, अस्तेयं चौर्यकर्माभाव, ब्रह्मचर्यं मैथुनराहित्यम्, अदृष्टार्थद्रव्यग्रहणं प्रतिग्रह, शौचं पवित्रता, सन्तोषो धैर्यम्, तपस्या तपश्चरणम्, ब्रह्मचर्यादिनियमपालनपूर्वकं गुरुकुले यदनदाङ्गादिशास्त्राध्ययनं शास्त्राध्ययनम्, फलाकाङ्क्षारहितस्य ईश्वरे सर्वकर्मफलसमर्पणं चरमार्थ। असंयतस्यैते शुचिभोजनादिकमपि नाभ्युदयकारणमिति कणादा निगदन्ति। अभ्युदयपदेनात्रोन्नतिरेव किन्तु न मोक्षो वा सर्वत पारत्रिकमङ्गलम्। असंयमस्योन्नतिबाधाप्रदत्वात्। तदाभयमाशयो यत्संयमस्यैकविधोन्नतावशुचिभोजनस्य चापरविधोन्नतौ कारणतेति। एकस्यैव पुरुषस्य संयतत्वे शुचिभोजित्वे तदुन्नति सर्वतोभावेन भवत्येव नान्यथा। असंयतस्य शुचिभोजनप्रयुक्तोन्नतौ सत्यामपि तस्याशुचिभोजनजन्यानिष्टं नैव निवर्त्तते। तस्यैकांशेऽभ्युदयसद्भावसत्त्वेऽप्यपरांशेऽभ्युदयाभावसत्त्वात्। अशुचिद्रव्यभोजिनि समाधिपथाग्रसरत्वं न सम्भवति। तद्भोजनेन तस्य देहमनोविकृत्यालस्यप्रमादादि-

दोषसन्दर्शनात् । पवित्रद्रव्यभोजनेनाशिकचित्तशुद्धिर्घटते, तदुभयसत्त्वे त्वेकस्मिन्नेव जन्मनि स्वर्गादि मोक्षो वावश्यं घटिष्यते, नान्यथा । इच्छाप्रयुक्तशुचिभोजनयमनियमाना धर्मं प्रति, स्रक्चन्दनवनितादिविषयभोगजन्यसुखज्ञानस्य सुखेच्छां प्रति, सुखेच्छायाश्च सुखसाधनज्ञानभोजनादिप्रवृत्तिं प्रति कारणता । खलु सुखसाधनयो द्वेषे जाते सुखविरोधिषु तेऽपि द्वेषो जायते । बहुकालविषयाभ्यासेन दृढतरसंस्कार. समुत्पद्यते, तत्संस्कारादेव सुखस्मरणात् सुखादिविषयिणीच्छा सञ्जायते, तदानीं तु खस्मरणं प्रति विद्वेषोऽपि जायते । सुखस्वरूपस्य मनोहरत्वेन दु खस्वरूपस्य च भयङ्करत्वेन जीव सुखे लालायितो दु खे च विद्विष्टो भवति । प्राणिमात्रस्य तु तेऽभिरुचितया सुखेऽनुरागस्य दु खे च द्वेषस्योत्पत्ते स्वाभाविकत्वात् ।

पु०—महोदया ! भवतु तर्हि, साम्प्रत प्रोक्तधर्माधर्मयो प्रवृत्तिनिवृत्त्युत्पत्तिप्रकार उपवर्णनीय ।

पि०—वत्स ! समुत्पन्नाया स्वर्गादिसुखभोगेच्छाया यज्ञादौ, सुरतादिक्षणिकसुखभोगेच्छायां सुरतादिपापकर्मणि वा शत्रुतेच्छाया हिंसादिपापकर्मणि लोक प्रवर्तते, नरकादिदु खभोगे च विद्वेषवशेनाधर्मकार्येभ्यो निवर्तते । ऐहिकोपवासादिधर्मकार्ये सुखव्याघातदर्शनात्ततोऽपि निवर्तते । प्रवृत्तिनिवृत्ती जीवस्य प्रयत्नविशेषस्वरूप । शास्त्रविहितकार्यानुष्ठानेन धर्मस्य, शास्त्रगर्हितकार्यानुष्ठानेन चाधर्मस्योत्पत्ति । शुभाशुभफलारम्भकादृष्टविशेष एव प्रारब्धाख्ययाभिहित । भोगमन्तरेण प्रारब्धक्षय कथमपि न भवेत् । "न हि कर्माणि क्षीयन्ते कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्य कृत कर्म शुभाशुभ"मिति प्राचीनोक्ते ।

पु०—महोदया ! भवतु तर्हि, निगद्यतां तावदिदानीमत्र कृपया जीवस्य मोक्षावाप्ति कथं स्यात् इति ।

पि०—वत्स ! श्रवणमनननिदिध्यासनादिकर्मभि पदार्थतत्त्वज्ञानपुर सरात्मतत्त्वज्ञानलाभेन क्रमशो मोक्षमुपलभते जीव । तत्र श्रवण नामात्मस्वरूपज्ञानार्थं पदार्थतत्त्वज्ञानपूर्वकगुरुमुखादुपनिषदाद्याध्यात्मिकशास्त्रार्थावगति । मनन विचारमूलकानुमितिद्वारोपनिषदाद्याध्यात्मिकशास्त्रार्थज्ञानदृढतासम्पादनम् । निदिध्यासन च पूर्वोक्तश्रवणमननाभ्यानि सन्दिग्धाकारेणावगतात्मनो नित्यज्ञानानन्दस्वरूपे संस्थापितान्त करणपुरुषस्य तदात्मनित्यज्ञानानन्दस्वरूपावधारणविषये 'एकाकारवृत्तिप्रवाह', एकाग्रता वा । एतान्यवात्मस्वरूपनिर्णायकानि भवन्ति । एतत्पथाप्रसरपुरुषस्य देहादिभ्य क्रमश 'अह'मित्याकारकाज्ञानादिथिमाहमाहमितिज्ञानमूलकदुखादिप्रवृत्तेर्दु खादिविच्छेदस्य च विनाशेनात्मसाक्षात्कारात् पुनर्धर्माधर्मोत्पत्तिर्न सम्भवति । तदानीम् 'अह'मित्याकारकज्ञानाभावेन सदैव पूर्वसञ्चितधर्माधर्मयो भृष्टबीजवद्विफलतया नूतनधर्माधर्मानुत्पत्ते । ईदृशदु खाभाव चरमदु खनिवृत्तिर्मोक्षो वेति निगदन्ति ।

पु०—महोदया ! तिष्ठतु तर्हि, साम्प्रत गुणान्तर्गत संस्कारस्वरूपनिर्णयेनानुग्राह्य ।

पि०—वत्स !, 'सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमत्त्व संस्कारत्व'मिति संस्कारलक्षणम् । सामान्यगुणपदेनात्र वेगस्थितिस्थापकयोर्ग्रहणम् । आत्मविशेषगुणास्तावद्बुद्ध्यादिभावनान्ता नवैव । तथा सत्येतदुभयविधगुणवृत्तिगुणत्वव्याप्यसंस्कारत्वरूपजातिमति संस्कारे संस्कारत्वरूपजातिस्तिष्ठतीति तादृशजातिमान् संस्कार इति तल्लक्षणसमन्वय । केवल 'जातिमत्त्व संस्कारत्व'मित्युक्तो घटादीनामपि जातिमत्त्वेन तत्रातिव्याप्तेस्तद्वारणाय गुणत्वव्याप्यान्तविशेषणोपादान जाते । घटादेस्तादृशजातिमत्त्वाभावान्न तत्रातिव्याप्ति । संयोगादा-

वतिव्याप्तिवारणायात्मविशेषगुणोभयवृत्तिपदोपादानम् । संयोगादिगुणे सादृश्योभयविधगुणवृत्तिजातिमत्त्वाभावान्न तत्रातिव्याप्तिः । ज्ञानाद्यात्मविशेषगुणेष्वतिव्याप्तेस्तद्वारणाय सामान्यपदोपादानम् । तेष्वात्मविशेषगुणवृत्तिगुणत्वव्याप्यज्ञानत्वादिरूपजातिमत्त्वदर्शनेनापि सामान्यगुणत्वाभावान्न तत्रातिव्याप्तिः । तथाविधसंस्कारस्तावत्त्रिविधः, वेगस्थितिस्थापकभावनाभेदात् । तत्र द्वितीयादिपतनासमवायिकारणं वेगाख्यसंस्कारः । यत्संस्कारवशादाकृष्टशाखादिपरित्यागेन तच्छाखादीनां पुनर्गमनपूर्वकं स्वस्वशाखायां स्थितिर्घटते तत्संस्कार एव स्थितिस्थापकसंस्कारः । स चाकृष्टशाखादिनिष्ठोऽतीन्द्रियश्च । अस्य यत्किमपि स्पन्दनं प्रति कारणता तिष्ठति । उत्तमाकारेण प्रथममनुभूयमाने यस्मिन् कस्मिन्नपि वस्तुनि यो हि संस्कारस्तदनुभवादेवात्मनि प्रतितिष्ठति तत्संस्कार एव भावनाख्यसंस्कारः । स चात्मनिष्ठः । अस्य स्मृतिप्रत्यभिज्ञात्मकोभयज्ञानजनकत्वमपि । तत्संस्कारमन्तरेण तदुभयज्ञानानुत्पत्तेः । न चात्र संस्कारोऽपलपितव्यः । पूर्वानुभूतवस्तुविषयकस्मरणप्रत्यभिज्ञयोः केनापि व्यापारेण विनानुपपत्त्या तदुभयप्रकारज्ञानं प्रति भावनाख्यसंस्कारस्यैव व्यापारत्वाङ्गीकारात् । यो हि यत्र व्यापारस्तत्र तद्व्यापाराभावसत्त्वे तदुत्पत्तौ तस्य कारणत्वं न सम्भवति । 'चक्षुषा घटं पश्यामी'त्यादिस्थले चक्षुषि चक्षुर्घटोभयसंयोगात्मकव्यापारासत्त्वे यथा घटप्रत्यक्षं प्रति चक्षुषः कारणता न सम्भवति, तथा यत्तद्वस्तुविषयकस्मरणं यत्तद्वस्तुविषयकप्रत्यभिज्ञा वा भवेत्तत्तद्वस्त्वभावसत्त्वेऽप्यनुभवसमयादारभ्य तत्तद्वस्तुजन्यतत्तत्कार्यसमकालीनात्मसम्बन्धः कश्चिदेको धर्मः आसीद्येन तादृशज्ञानं समुत्पद्येत इति कल्प्यते । तादृशकल्पितधर्म एव भावनाख्यसंस्कारः । पूर्वोक्तवेगाख्यसंस्कारोऽपि द्विविधः; कर्मवेगजभेदात् । तत्र शरीरनोदनजन्य-

वेगात्मक कर्म कर्मजवेगाख्यसंस्कारो, वेगविशिष्टकपालादिवेगजन्यघटादिवेगश्च वेगजवेगाख्यसंस्कार। नोदनं कम्पनमित्यर्थः स च वेगः पृथिवीजलतेजोवायुमनोमात्रवृत्तिः, स्थितिस्थापकसंस्कारस्तु कटादिपृथिवीमात्रवृत्तिः।

पु०—महोदया ! तिष्ठतु तर्हि, साम्प्रतमत्र जिज्ञासामि यत्साधारणेषु विशेषेषु च गुणेषु किमात्मकद्रव्ये कति ? किमात्मकाश्च ? गुणास्तिष्ठन्तीति।

पि०—वत्स ! रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वगुरुत्ववेगाख्या साधारणगुणाश्चतुर्दश, रूपरसगन्धस्पर्शाश्च विशेषगुणाश्चत्वारः पृथिव्याम्, गन्धेतरावशिष्टपृथिवीनिष्ठत्रयोदशगुणैः सह स्नेहो मिलित्वा चतुर्दश साधारणगुणा रूपरसस्पर्शस्नेहसांसिद्धिकद्रवाः पञ्च विशेषगुणाश्च जले, रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्ववेगा एकादश साधारणगुणा द्वौ च रूपस्पर्शात्मकविशेषगुणौ तेजसि, स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगाख्यसंस्कारा नव साधारणगुणा द्वौ च रूपस्पर्शात्मकविशेषगुणौ वायौ, संख्यापरिमाणपृथक्त्वसंयोगविभागशब्दा षट् साधारणगुणा एकश्च शब्दात्मकविशेषगुण आकाशे, संख्यापरिमाणपृथक्त्वसंयोगविभागा साधारणगुणा पञ्चैव कालदिशोः, बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंख्यापरिमाणपृथक्त्वसंयोगविभागभावनाख्यसंस्कारधर्माधर्म्याश्चतुर्दश साधारणगुणा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्कारात्मकाश्च नव विशेषगुणा आत्मनि, संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धीच्छाप्रयत्नाख्या अष्ट साधारणगुणास्त्रयश्च बुद्धीच्छाप्रयत्नाख्यविशेषगुणा परमात्मनि, संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगाख्यसंस्कारा अष्टावेव साधारणगुणाश्च मनस्येवावतिष्ठन्ते। "वायोर्नवैकादश

तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश। दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च"ति प्राचीनोक्ते।

इति गुणनिरूपणम्॥

अथ कर्मनिरूपणम्।

पु०—पितः! भवतु तर्हि, साम्प्रतं पूर्वोक्तकर्मस्वरूपनिरूपणेनानुग्राह्य।

पि०—वत्स! 'युगपदेकाधिकद्रव्यावृत्तित्वे सति गुणशून्यत्वे सति संयोगिभिन्नत्वे च सति संयोगविभागासाधारणनिमित्तकारणत्वं कर्मत्व'मिति कर्मलक्षणम्। अत्र प्रथमविशेषणमात्रोपादाने आकाशादावतिव्याप्तेस्तद्वारणाय द्वितीयविशेषणोपादानम्। गुणशून्यपदोपादानेन क्वचनाप्यविद्यमानानामाकाशादिव्यापकद्रव्याणामेकाधिकद्रव्यावृत्तित्वेऽपि तेषां गुणवत्तया तच्छून्यत्वाभावान्न तत्रातिव्याप्तिः। यत्पदार्थे गुणो न तिष्ठति तमेव गुणशून्यो निर्गुणो वेति वदन्ति। रूपरसादिगुणानां युगपदेकाधिकद्रव्येष्वविद्यमानतया 'गुणे गुणो न तिष्ठती'ति नियममादाय तेषां गुणशून्यत्वेन तेष्वतिव्याप्तेस्तद्वारणाय 'संयोगविभागासाधारणकारणत्व'मिति पदोपादानम्। तेषां संयोगादिकारणत्वाभावान्न तत्रातिव्याप्तिः। किमपि कारणान्तरमनपेक्ष्यैव यत्कारणं भवति तदेवासाधारणकारणम्। अदृष्टेऽतिव्याप्तिवारणायासाधारणांशपदोपादानम्। तस्य सकलजन्यवस्तुमात्रं प्रति कारणतया संयोगविभागौ प्रत्यपि कारणत्वसम्भवेन स्पन्दनात्मककर्माभावेन संयोगविभागाद्यसम्भवतया तत्र कारणान्तरसापेक्षत्वेन तस्यैवादृष्टस्यासाधारणकारणत्वाभावात्तत्र नातिव्याप्तिः। हस्तपुस्तकादावतिव्याप्तिवारणाय संयोगिभिन्नपदोपादानम्। संयोगात्मकगुणस्योभयपदार्थवृत्तित्वेन तत्र संयोगित्वसत्त्वान्नातिव्याप्तिः।

घटादावतिव्याप्तिवारणाय विशेष्यांशोपादानम्। तत्र तादृशकारणत्वाभावान्नातिव्याप्तिः। तच्च कर्म पञ्चविधम्। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात्। तत्र 'ऊर्ध्वदेशसंयोगानुकूलासाधारणनिमित्तकारणव्यापारविशेष उत्क्षेपणम्। अधोदेशसंयोगानुकूलासाधारणनिमित्तकारणव्यापारविशेषोऽपक्षेपणम्। यस्य कस्यापि वस्तुनः शरीरादिसन्निकृष्टसंयोगापादकासाधारणनिमित्तकारणक्रियाविशेष एवाकुञ्चनम्। वक्रतापन्नवस्तुन ऋजुत्वापादकासाधारणनिमित्तकारणक्रियाविशेषः प्रसारणम्। उत्तरदेशसंयोगानुकूलासाधारणनिमित्तकारणक्रियाविशेषो गमनं चेति। उत्तरदेशः स्थानान्तरमित्यर्थः। भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनानामपि गमनान्तर्गतत्वमेवेत्यवधेयम्। भ्रमणं घूर्णनं, रेचनं हृद्वायुपरित्यागः, स्यन्दनं क्षरणम्, तिर्यग्गमनं च वक्रगतिरित्यर्थः।

इति कर्मनिरूपणम्॥

## अथ सामान्यनिरूपणम्।

पु०—पितरः! भवतु तर्हि, साम्प्रतं सामान्यस्वरूपं निरूपणीयम्।

पि०—वत्स! "नित्यत्वे सत्यनेकसमवेतत्वं सामान्यत्व"मिति सामान्यलक्षणम्। तत्रानेकसमवेतत्वं नामानेकपदार्थेषु समवायसम्बन्धेनाश्रितत्वसम्बन्धेन सम्बन्धित्वं, न तु समवायवत्त्वम्। सामान्यादौ कस्यापि वस्तुनः समवायसम्बन्धेनावृत्तेः। सामान्यं जातिरित्यर्थः। सत्त्वं त्वनेकं द्वित्वादिसंख्याविशिष्टमपि। संयोगादिगुणानामपि समवायसम्बन्धेनानेकद्रव्यनिष्ठतया तत्रातिव्याप्तेस्तद्वारणाय नित्यपदोपादानम्। तेषामनित्यत्वान्न तत्रातिव्याप्तिः। गगनादिनित्यद्रव्यगतपरिमाणादीनां नित्यत्वेन समवायसम्बन्धवृत्तित्वेन च तत्रातिव्याप्तेस्तद्वारणायानेकपदोपादानम्। गगनादीनामेकत्वेन तद्गतपरिमाणादीनामप्येकस्थत्वानेकत्वा-

भावान्न तत्रातिव्याप्तिः। अत्यन्ताभावस्यानेकत्वेनानेकत्र विद्यमानत्वम् ■ तत्रातिव्याप्तिस्तद्वारणाय समवेतपदोपादानम्। तस्य स्वरूपसम्बन्धेनैव विद्यमानतया समवायसम्बन्धेन वृत्तित्वाभावान्न तत्रातिव्याप्तिः। यथा द्रव्यत्वादिकं नित्यं सदनेकत्वविशिष्टद्रव्यादिपदार्थेषु समवायसम्बन्धेन विद्यमानतया जातिपदवाच्यं भवति, तथा घटत्वपटत्वादयोऽपि जातिपदवाच्या भवन्ति। किन्तु व्यक्तेरभेदादीनां षण्णां जातिबाधकत्वमवधेयम्। "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः" इति द्रव्यकिरणावल्यामुदयनाचार्यैरुक्तत्वात्। तत्रैकव्यक्तिकत्वं भेदरहितव्यक्तिवृत्तित्वम्। यथा—गगनत्वकालत्वादयः। तुल्यत्वं तुल्यव्यक्तिवृत्तित्वं समानव्यक्तिनिष्ठत्वमिति यावत्। अथवा स्वभिन्नजातिसमनियतत्वं स्वभिन्नजातिसमानस्थानवृत्तित्वमित्यर्थः। यथा—घटत्वकलशत्वरूपजातिः। एकपदार्थयोर्घटकलशयोस्तदुभयजातिवृत्तेः। स्वपदेनात्र कलशत्वं तद्भिन्नजातिः घटत्वं तस्य समानस्थानमात्रे घटे विद्यमाने कलशत्वं स्वभिन्नजातिसमानस्थानवृत्तित्वसम्भवान्नास्य जातित्वम्। परस्परात्यन्ताभावसमानाधिकरणत्वे सत्येकाधिकरणवृत्तित्वं सङ्करत्वमिति सङ्करलक्षणम्। परस्परयोर्द्वयोः पदार्थयोरत्यन्ताभावस्य यत्समानाधिकरणमर्थादेकाधिकरणं तद्वृत्तित्वं तत्र तयोरेकत्र समावेशः स्थितिरित्यर्थः। यथा—भूतत्वमूर्तत्वरूपा जातिः। क्षितिजलतेजोवाय्वाकाशात्मकपदार्थपञ्चकस्य भूतपदार्थत्वेन तत्र भूतत्वं तिष्ठति, क्षितिजलतेजोवायुमनोरूपपदार्थपञ्चकस्य च मूर्तपदार्थत्वेन तत्र मूर्तत्वं तिष्ठति। मूर्तत्वं नाम न्यूनपरिमाणवत्त्वमपकृष्टपरिमाणवत्त्वं वा। गगने मूर्तत्वाभावभूतत्वे मनसि च भूतत्वाभावमूर्तत्वे तिष्ठतः। मूर्तत्वस्य 'भूतत्वं नास्ती'त्याकारकात्यन्ताभाववति मनसि, भूतत्वस्य च 'मूर्तत्वं नास्ती'त्याकारकात्यन्ताभाव-

चत्याकाशे विद्यमानतया तदुभयधर्मे एकाधिकरणवृत्तित्वनिबन्धन सामानाधिकरण्य तिष्ठति। पुनश्च पृथिव्यप्तेजोवायुषु मूर्तत्वमूर्तत्वयोरुभयो विद्यमानत्वेन तदुभयधर्मे एकाधिकरणवृत्तित्वमपि तिष्ठति। सुतरा भूतत्वमूर्तत्वयो साङ्कर्यनिबन्धनजातिमत्त्व नैव सम्भवति। पुन-पुनराकाक्षात्मकानवस्थादोषविशेष एवानवस्थिति। यथा जातौ जात्यन्तराङ्गीकार, जातौ पुनर्जात्यन्तराङ्गीकारे तज्जातौ पुनर्जात्यन्तर तत्रापि पुनर्जात्यन्तरमित्यमाकाक्षानिवृत्त्यभावात्तत्रानवस्थादोषापत्त। रूपहानि स्वरूपहानि। यथा विशेषपदार्थे जात्यङ्गीकार, स्वतो व्यावर्तकविशेषपदार्थे व्यावर्तकान्तरजातिपदार्थाङ्गीकारे तस्य स्वतो-व्यावर्तकतास्वरूपस्य हानेः। व्यावर्तकत्वच नाम परस्परभेदकत्वम्। असम्बन्धश्च प्रतियोगितानुयोगितासम्बन्धान्यतरसम्बन्धेन समवायसम्बन्धा-भाव। अत्र प्रतियोगिपदेनाधेयोऽनुयोगिपदेन चाधारो ज्ञेय। तत्र प्रतियोगिनि प्रतियोगितानुयोगिनि चानुयोगिता स्वरूपसम्बन्धविशेषणाव-तिष्ठते। जातिस्तु समवायसम्बन्धनैव तिष्ठति न तु सम्बन्धान्तरेण। तेन समवायाभावयोर्जात्यनङ्गीकार। ताभ्या सह समवायसम्बन्धेन जातेरसम्बन्धात्। अत समवायत्वाभावत्वयोर्जातित्वाभाव। जातिस्तु द्रव्यगुणकर्मस्वेव समवायसम्बन्धेन तिष्ठति। तच्च सामान्य द्विविधम्। परापरभेदात्। तत्र यत्सामान्य बहुदेशे तिष्ठति तत्परसामान्य परजातिर्वा, यच्च सामान्यमल्पदेशे तिष्ठति तदपरसामान्यमपरजातिर्वा। परजातिस्तु सत्ताऽप्यप्यभिहिता भवति। सा च सत्ता द्रव्यगुणकर्ममात्रवृत्ति। सत्ताया द्रव्यादित्रयेषु, द्रव्यत्वस्य क्षित्यादिनवद्रव्यमात्रे, गुणत्वस्य रूपादिचतु र्विंशतिगुणेषु, कर्मत्वस्य चोत्क्षेपणादिकर्मपञ्चकमात्रे विद्यमानत्वेनैषा प्रत्येक सत्तापेक्षयाल्पदेशवृत्तित्वनिबन्धनव्याप्यजातित्वमपरजातित्व वा

बोध्यम्। द्रव्यत्वादिजातीनामपि घटत्वादिजात्यपेक्षया परजातित्वम्। द्रव्यत्वस्य नवद्रव्येषु, घटत्वस्य च घटमात्रे, गुणत्वस्य चतुर्विंशतिगुणेषु रूपत्वस्य रूपमात्रे, कर्मत्वस्य कर्मपञ्चके उत्क्षेपणत्वस्य चोत्क्षेपणमात्रे विद्यमानत्वेन घटत्वाद्यपेक्षयाधिकदेशवृत्तित्वात्। सामान्यविशेषभाव-मादायैव पूर्वोक्तजातिविभागो न कृतः, किन्तु क्वचित्सर्वजातिव्यापकत्वेन क्वचिच्च तद्भिन्नजातित्वरूपेणैव कृतः। एतद्विभागमध्ये इत्थं बोद्धव्यं यत्केवलसत्ता सर्वजातिव्यापिका परा जातिर्वा तद्भिन्नसकलजातिरपरा, विशेषसामान्यं वा। द्रव्यत्वगुणत्वकर्मत्वरूपजातिं सत्ताभिन्नेति। परजातिं सामान्यजातिं वा साधारणजातिरपरजातिं विशेषजातिरिति वदन्ति। यथा प्राणित्वं साधारणजातिर्मनुष्यत्वपशुत्वादयश्च विशेष-जातिरिति ज्ञेयम्।

पु०—पितः! विविदिषाम्यत्र सत्ताजातिविषयेऽस्या कश्चिद्विशे-षभावोऽस्ति? न वेति।

पि०—वत्स! सत्ताया आपेक्षिकविशेषभावो नास्तीति तां सामा-न्यजातिं परां जातिर्वेति वदन्ति। नेयं जातिरपलपितव्या। वक्ष्यमाण-विभागासम्भवात्। तथाहि कस्यचिद्वस्तुनो विभागकाले विभज्यमान-वस्तुविभागो तद्गतासाधारणधर्मेणैव भवति, न तु केनचित्सामान्य-धर्मेण। सकलजात्यधिकदेशवृत्तित्वमेव सत्ताया असाधारणधर्मः। यथा पण्डितमूर्खभेदेन द्विविधो मनुष्य इति विभागकाले पण्डितमूर्खयो-र्विभागः पण्डितगतासाधारणधर्मपण्डितत्वेन मूर्खगतासाधारणधर्ममूर्ख-त्वेनैव [illegible] भवति, न तु तदुभयगतसाधारणधर्ममनुष्यत्वेन। किं वा पण्डितस्य मूर्खत्वं वा मूर्खस्य पण्डितत्वमसाधारणधर्मो न भवतीति तदुभयगतासाधारणधर्मपण्डितत्वमूर्खत्वे आदायैव तदुभयोर्विभाग-

सम्भवति न हि मनुष्यत्वमादाय। तस्य पण्डितमूर्खोभयनिष्ठतया साधारणधर्म्मत्वेनासाधारणधर्म्मत्वाभावात्। विभज्यमानैकवस्तुगतधर्म्मान्तरेण सहाविद्यमानधर्म्म एवासाधारणधर्म्मो विद्यमानधर्म्मश्च साधारणधर्म्म। अस्या विशेषभावास्तित्वं नाङ्गीक्रियते। सदस्तित्वस्वीकारे पूर्वोक्तदिशा सद्विभाजयितुमशक्यत्वात्। द्रव्यस्य गुणस्य कर्म्मस्वरूपजातीनां सत्तापेक्षयाऽल्पदेशवृत्तित्वेन तासामपरत्वं क्षुद्रत्वं वा सत्तायाश्च पृथिवीत्वादिसकलजात्यपेक्षयाधिकदेशवृत्तित्वेन तस्याः परत्वं महत्त्वं वा ज्ञेयम्।

पु०—पूज्यपादाः ! सत्ताया पदार्थान्तरत्वं मया नाङ्गीकर्त्तव्यम्। सत्सत्तयोरेकपदार्थत्वमङ्गीकृत्य तस्याः सत्पदार्थभूतद्रव्यगुणकर्म्मस्वरूपत्वाङ्गीकारे किमन्यहाने। न च सत्सत्तयोर्विभिन्नपदार्थत्वं सम्भवति। घटपटयोः परस्परपृथक्त्वानुभववद् द्रव्य गुण कर्म्मभ्योऽपि तस्याः पृथक्त्वानुभवापत्तेः।

पि०—वत्स! न चैव वक्तुं युज्यते। अतीतानागतवर्त्तमानकालीनघटपटादिसकलसाधारणपदार्थेषु 'सदि'त्यनुगतप्रतीतये सद्व्यवहाराय च सत्पदार्थस्वीकारात्। अन्यथा वर्त्तमानकालीनघटपटादिपदार्थास्तित्वमादायैतद्घटादिषु 'सदि'तिव्यवहारवदतीतानागतघटादिपदार्थेषु तथाविधानुगतप्रतीतिस्तद्व्यवहारादयश्च न स्युः। 'सदि'त्याकारकप्रतीतिकालेऽतीतानागतकालीनघटादिपदार्थानामसत्त्वात्। कालसम्बन्धपर्यवसितास्तित्वस्य प्रत्येकघटादिरूपाश्रयभेदेन विभिन्नतया 'सदि'त्याकारकानुगतप्रतीतिस्तद्व्यवहारो वा तथाविधास्तित्वावलम्बनेनैवोत्पद्यत इति सत्ताजाति स्वीक्रियते। न च सत्पदार्थद्रव्यादित्रयाणां सत्तापदार्थस्वरूपत्वं वक्तव्यम्। "द्रव्यं सदि'त्याकारकव्यवहारवद् 'द्रव्यमेव गुण' इत्याकारकव्यवहारापत्तेः, सत्ताया अपि गुणोऽपृथगित्यङ्गीकारापत्तेश्च। अतो द्रव्यादिपदार्थत्रयभिन्ना

सत्तेति निर्णेयम्। द्रव्यादित्रयाणां सत्ताभिन्नपदार्थत्वेन यथा 'द्रव्यं न गुण' इति प्रतीतिस्तथा 'तत्सत्तापि ने'ति प्रतीतिरिति ज्ञेयम्।

पु०—महोदयाः! सत्तायाः सत्पदार्थद्रव्यादित्रयस्वरूपत्वं मयाङ्गीकर्त्तव्यम्। एकस्या एव 'सदि'त्याकारकासाधारणसंज्ञया द्रव्यादिपदार्थत्रयस्य साधारणधर्म्मवदेकस्या अपि सत्तायास्तत्साधारणधर्म्मत्वात्।

पि०—वत्स! न चैवं वक्तुं शक्यते। तथात्वे द्रव्यादित्रयस्याऽनेकत्ववत्सत्ताया अप्यनेकत्वापत्तेः। अनेकत्वविशिष्टद्रव्यादिपदार्थैरनेकत्वसंज्ञाया एकाकारज्ञानस्य च व्यवहारासम्भवेनैकत्वविशिष्टसत्ताया द्रव्यादिपदार्थत्रयभिन्नत्वमेव। सत्ताया गुणकर्म्मणोर्विद्यमानत्वेन गुणवृत्तित्वकर्म्मवृत्तित्वरूपधर्म्मद्वयं तस्या एव साधारणधर्मः, न तु द्रव्यादीनाम्। वस्तुभेदमादायैव तद्गतधर्मवैधर्म्यदर्शनादेतद्धर्म्मवैधर्म्यमेव सत्तया सह द्रव्यादिपदार्थत्रयस्य वैधर्म्यं साधयतीति बोध्यम्। किञ्च सामान्यजातिं परा जातिर्विशिष्टजातिं चापरा जातिरित्यपि वदन्ति। या च जातिः कस्याश्चिज्जातेरपेक्षया परा कस्याश्चिज्जातेरपेक्षया चापरा भवति सैव परापरजातिः। तादृशजातिस्तु द्रव्यत्व-गुणत्व-कर्मत्वस्वरूपैव। सत्ताया द्रव्यादित्रयस्वरूपत्वाङ्गीकारे तत्र द्रव्यत्वादिजातीनामपि विद्यमानत्वशङ्कया 'सत्तैव द्रव्यगुणकर्माणी'ति व्यवहार आपद्येत, किन्तु तादृशव्यवहाराभावेन 'सत्ताया द्रव्यादिपृथक्पदार्थत्व'मिति निर्णेतव्यम्। सत्सत्तयोरसमानाकारानुभवस्तदुभयभेदप्रयुक्तो न भवति, किन्तु समवायसम्बन्धप्रयुक्त एव। किञ्च तत्सामान्यस्यानेकद्रव्यवत्त्वमप्यस्ति। अनेकद्रव्यवत्त्वं चात्र द्रव्यभिन्नावृत्तित्वे सति सकलद्रव्यवृत्तित्वम्। द्रव्यत्वस्यापि परापरजातित्वेनानेकद्रव्यवत्त्वम्। न चैतावता द्रव्यत्वसत्तयोरेकजातित्वमाशङ्कनीयम्। द्रव्यत्वस्य द्रव्यमात्रवृत्तित्वेन सत्तायाश्च

द्रव्यगुणकर्ममात्रवृत्तितया तयोर्विभिन्नजातित्वात्। सत्तावद्गुणत्वकर्मत्वयोरपि पृथग्धर्मत्वमवधेयम्। तयोरनेकद्रव्यवत्त्वासम्भवात्।

पु०—पितरः! द्रव्यत्वसत्तयोरतिरिक्तपदार्थत्वेऽपि द्रव्यद्रव्यत्वयोः पृथक्त्वमङ्गीकृत्य द्रव्यत्वस्यातिरिक्तजातित्वं मया नाङ्गीकर्त्तव्यम्। तयोः पृथक्स्वरूपत्वाननुभवात्।

पि०—वत्स! न एवं वक्तुं शक्यते। द्रव्यत्वस्य द्रव्यस्वरूपत्वाङ्गीकारे तत्रापि परापरजातिमत्त्वापत्तेः। द्रव्यपदार्थ एव द्रव्यत्वसत्तापृथिवीत्वादिपरापरजातयः सन्ति, न तु द्रव्यत्वे। द्रव्यत्वस्य स्वयं जातिपदार्थत्वेन तत्र तदस्तित्वाङ्गीकारेऽनवस्थादोषापत्तेः। द्रव्यत्वं पृथिवी, पृथिव्येव द्रव्यत्वं वे'त्याकारकव्यवहारो नैव दृश्यते कुत्रापि। किन्तु 'पृथिव्येव द्रव्य'मिति व्यवहारः सर्वत्र। अतो द्रव्यद्रव्यत्वयोर्नैकपदार्थत्वम्। तस्य नापि गुणकर्मस्वरूपत्वमस्ति। एकस्यैव तस्य सदा सकलद्रव्येष्वविद्यमानत्वप्रसङ्गात्। यदि त्वया वक्तव्यं गुणत्वस्यापि सत्तास्वरूपत्वमस्त्विति। तन्न गुणमात्रवृत्तित्वात्। गुणमात्रवृत्तित्वं गुणभिन्नपदार्थावृत्तित्वे सति गुणवृत्तित्वम्। गुणमात्रवृत्तित्वं न द्रव्यगुणकर्मणां सत्तया वा धर्मः, किन्तु गुणत्वस्यैव। द्रव्यादीनां सत्तायाश्च गुणत्ववैधर्म्यसंदर्शनेन गुणत्वसत्तयोः परस्परविभिन्नत्वात्।

यदत्र त्वया वक्तव्यं गुणगुणत्वयोर्विभिन्नाकारत्वाननुभवात्तयोरैकत्वमङ्गीकर्त्तव्यमिति, तन्न। गुणेषु गुणत्वसत्तात्मकपरापरजातिद्वयाङ्गीकृतिवद्गुणत्वरूपजातावपि तादृशपरापरजातिद्वयाङ्गीकारापत्तेः। नापि तस्य द्रव्यादिस्वरूपत्वम्। द्रव्यादौ परापरजातिमत्त्वदर्शनात्। न च कर्मत्वस्यापि सत्तास्वरूपत्वं वाच्यम्। तस्यापि कर्ममात्रवृत्तित्वात्। कर्ममात्रवृत्तित्वं नाम कर्मभिन्नपदार्थावृत्तित्वे सति कर्ममात्रवृत्तित्वम्।

कर्मत्वे सत्ताद्रव्यत्वगुणत्वकर्मत्वद्रव्यादित्रयसमवायादीनामविद्यमानत्वेन कर्मत्वेन सह सत्तादीनां कर्ममात्रवृत्तित्वरूपधर्ममादाय वैधर्म्यदर्शनात्तेषां परस्परभेदो वर्त्तत एव। किञ्चोत्क्षेपणत्वादिपरापरजातीनां कर्मवृत्तित्वेन कर्मत्वस्योपरि कस्याश्चिदपि परापरजातेरवृत्तितया च तस्य द्रव्यगुणकर्म-स्वरूपत्वमपि न सम्भवतीति ज्ञेयम्।

पु०—पितः ! प्रागुक्तं यद्भवद्भिः सत्ताया एकत्वं न द्रव्यादि-स्वरूपत्वमपीति, तन्मया नाङ्गीकर्त्तव्यम्। तस्या द्रव्यादित्रयवृत्तित्वेन द्रव्यत्वगुणत्वकर्मत्वैरवच्छिन्नानां तिसृणां सत्तानां विभिन्नतया द्रव्यादि-पदार्थत्रयस्वरूपत्वे किमप्यहाने।

पि०—वत्स ! सत्ताया विभिन्नत्वं नैव सम्भवति। द्रव्यादि-पदार्थत्रये 'इह सदि'त्याकारकज्ञानस्य व्यवहारस्य वा समानाकारेणैव परिलक्षिततवात्, तत्र 'एकैव सत्ते'त्याकारकज्ञानस्य व्यवहारस्य वा सम्भवाच्च ज्ञानस्य व्यवहारस्य वा भेदो विषयभेदमन्तरेण नैव सम्भवतीति युक्तिबलेनैव सत्ताया एकत्वनिरूपणमभूत्। न चास्या गुणैर्बहुत्वं वाच्यम्। अस्या अनेकत्वविषयकानुकूल्ययुक्त्यभावेनाबाधकयुक्त्यनङ्गी-कारात्। यच्च त्वया प्रश्नस्य घटादिनित्यपदार्थवृत्तिजातेरपि नित्यत्वे तत्तत्पदार्थविनाशानन्तरं तदवस्थिति क्वेति, तत्र भ्रम। महाप्रलयानङ्गी-कर्त्तॄणां मते तत्तज्जातीयापरापरपदार्थेषु तदङ्गीकर्त्तॄणां च मते काल एव स्थास्यति। जन्यवस्तुमात्रं प्रति कालस्यैव कारणत्वाङ्गीकारात्। पुनः सृष्टिदशायां 'आकृतिग्रहणा जाति'रिति नियमेन पुनस्तदवस्थानाच्च।

पु०—मान्या ! तिष्ठत्वत्र सामान्यविषयकविचारः, साम्प्रतं पूर्वो-क्तविशेषपदार्थस्वरूपनिर्णयेनानुग्राह्य।

पि०—वत्स ! निःसामान्यत्वे सत्युभयासमवेतत्वे सति समवेतत्वं

विशेषत्व'मिति विशेषलक्षणम्। यो हि पदार्थः सामान्यशून्यो भूत्वोभयोः पदार्थयोः युगपत्समवायसम्बन्धेनाविद्यमान सन् स्वतो व्यावर्त्तकरूपेण निरवयवपरमाण्वादिद्रव्यव्यावृत्त्यर्थं तत्तद्द्रव्येषु समवायसम्बन्धेनैव तिष्ठति, तादृशपदार्थ एव विशेषपदार्थ इत्यर्थः। स च तादृशद्रव्यपरमाण्वादीनां परस्परभेदक एव। उभयासमवेतगगनपरिमाणादावतिव्याप्तिवारणाय निःसामान्यपदोपादानम्। तेषु सामान्यस्य विद्यमानतया सामान्यशून्यत्वाभावान्नातिव्याप्तिः। सामान्येऽतिव्याप्तिवारणायोभयासमवेतत्वपदोपादानम्। सामान्यस्योभयपदार्थे समवायसम्बन्धेन विद्यमानतयोभयासमवेतत्वाभावान्न तत्रातिव्याप्तिः। गगनत्वादावतिव्याप्तिवारणाय समवेतत्वपदोपादानम्। तस्य स्वरूपसम्बन्धेन विद्यमानत्वेऽपि समवायसम्बन्धेनाविद्यमानतया न तत्रातिव्याप्तिः। स्वरूपसम्बन्धस्तु स्वात्मकसम्बन्ध एव। निरवयवानां पार्थिवपरमाणूनां समत्वेऽपि जलीयपरमाणुभिः सह तेषां वैजात्यमस्त्येव। तदुभयपरमाणुगतभेदसत्त्वेन तदारब्धपृथिवीजलस्वरूपयोर्वैजात्योपलब्धेः। यदत्र त्वया पृष्टमेतत् पार्थिवपरमाणुसमूहस्य समत्वे तादृशसमानपरमाणुभ्यो विविधाकारगुणक्रियाविशिष्टधान्यमुद्गनारिकेलपनसादिपदार्थोत्पत्तिः कुतः सम्पद्यते? तुल्यानामेव पार्थिवपरमाणूनां तत्सकलपदार्थान् प्रत्यविशेषकारणत्वे कुतो वा विचित्रगुणक्रियादिविशिष्टविभिन्नपदार्थाः समुत्पद्यन्ते? कुतो वैकस्मादेव वृक्षादेकविधपरमाणुसमुत्पन्नानां बहूनां फलानामाकृत्या यथावदेकविधत्वं न घटते? कुतो वा तेषु रूपरसगन्धादिगुणगतभेदः परिलक्ष्यत इति। अत्र ब्रूमः—पार्थिवादिपरमाणुषु यथास्वं पृथिवीत्वाव्यतिरिक्तायाः कस्याश्चिदप्यवान्तरजातेः समवायस्यानभ्युपगमेऽपि तादृशपरमाणुभ्य एव विचित्राणि द्रव्याण्यारभ्यमाणानि दृश्यन्ते। नह्यत्र किमप्य-

समञ्जसम्। आकृतेर्जातिलिङ्गत्वादवयवसन्निवेशरूपायास्तस्या भेदसत्त्वेन तदभिव्यङ्ग्यानां द्रव्यगतानामवान्तरजातीनां भेदस्यावश्याङ्गीकरणीयत्वम्। तथा च पार्थिवपरमाणुषु पृथिवीत्वादिजातिसमवायाभावेऽपि तदारब्धकार्येष्ववान्तरनानाजातीयत्वमविरुद्धमेव। किञ्च तत्तत्परमाणुनिष्ठतद्विशेषेण तत्तत्परमाणौ परमाण्वन्तराद्व्यावृत्तिसम्भवेऽपि पार्थिवपरमाणुषु बहुषु प्राक्तनपाकानुसारं विविधपाकजविशेषाणामप्यनुवृत्तिदर्शनात्तादृशपाकजविशेषानुविधायिन्येव विचित्रा सृष्टिप्रक्रिया व्याख्येया। अत उभयोराम्रपनसयोः समानेऽपि परमाणुभिरारब्धत्वे पूर्वसर्गीयाम्रपाकजातसंस्कारानुविद्धपरमाणूनां यथाम्रजनकत्वं तथा पनसपाकजविशेषवतां परमाणूनामपि पनसोपादानत्वमिति रहस्यम्। एतेन प्राक्तनाम्रावयवभूतेभ्यः पार्थिवपरमाणुभ्य आम्रोत्पत्तिः, पनसघटकावयवेभ्यः परमाणुभ्यश्च पनसोत्पत्तिरिति सिद्धम्। इत्थं सर्वत्रावधेयम्। अनादौ खल्वस्मिन् संसारे न कस्यचिदपूर्वोपजनो नामेति न किमप्यत्रास्कृतम्। वस्तुतस्तु परमाणूनां स्वभावभेदेनैव मुख्यतया तत्तत्कार्येषु गुणक्रियादिवैचित्र्यमप्युपपादनीयम्। ये खलु विशेषा मुद्गारम्भकपरमाणुषु तिष्ठन्ति, न ते धान्याद्यारम्भकपरमाणुष्ववतिष्ठन्ते, ये च पुनर्धान्याद्यारम्भकपरमाणुषु सन्ति ते न मुद्गारम्भकपरमाणुष्विति बोध्यम्। एतद्विशेषपदार्थस्वीकारादेवास्य दर्शनस्य वैशेषिकदर्शनसंज्ञालाभः। अयं विशेषपदार्थो गौतमादिदार्शनिकैर्नाङ्गीक्रियते। अस्मन्मते विशेषशब्दाद् द्विविधोऽर्थः प्रतिभाति। तत्रैकैकपरमाणुमात्रवृत्ति पदार्थद्वयावृत्तिर्गुणभिन्ननित्यधर्म इति प्रथमपक्षार्थो द्वितीयपक्षार्थश्चापरजातिरूपार्थः। तस्य प्रथमपक्षार्थकरणे स्वतन्त्रपदार्थत्वं, द्वितीयपक्षार्थकरणे च सामान्यपदार्थान्तर्गतत्वम्। ॥ धासद्वय ।

पु०—पितर ! भवतु तर्हि, साम्प्रतं समवायपदार्थनिरूपणेनानुग्राह्य ।

पि०—वत्स ! नित्यसम्बन्धत्व समवायत्वमिति समवायलक्षणम् । असौ अयुतसिद्धद्रव्यवृत्ति । यत्पदार्थद्वयमध्ये एकैकविनाशेनापरस्य विनाशोऽवश्य घटते तत्पदार्थद्वयमेवायुतसिद्धद्रव्यमिति निगद्यन्ति । अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनो क्रियाक्रियावतो नित्यद्रव्यविशेषयोश्च यत्सम्बन्धेन विद्यमानता घटते तत्सम्बन्ध एव समवायसम्बन्ध । स चैक एव । यदत्र केनचिदुक्तम्य समवायसम्बन्धस्वरूपानुभवात्तस्य द्रव्यादिपदार्थस्वरूपत्वमस्त्विति, तन्न । द्रव्यादिभ्य सत्ताया पृथक् त्व निर्जात्युक्त्यैव समवायस्यापि द्रव्यादिपृथक्पदार्थत्वमिगमात् । तथाहि "समवायो द्रव्य'मित्याकारकज्ञानं व्यवहारो वा नैव भवति । 'द्रव्य'-मित्याकारके ज्ञाने व्यवहारे वा द्रव्यत्वसमवाययोर्विषयत्वभावात् । तज्ज्ञाने द्रव्य क्वचिद्विषयो भवेत्क्वचिद्वा विषयो न भवेत । तत्र ज्ञानस्य प्रमात्वे विषयो भवेदप्रमात्वे च विषयो न भवेत् । यथा 'अन्धकारो द्रव्य'मिति भ्रमात्मकज्ञानस्य विषयो द्रव्य न भवति । समवायस्य द्रव्यस्वरूपत्वे 'द्रव्य'मित्याकारकज्ञान भ्रमात्मकम् ? उत प्रमात्मकम् ? उभयविधज्ञाने द्रव्यद्रव्यत्वयोर्विषयत्वेन भ्रमप्रमाज्ञानयो किमपि वैलक्षण्याभावात् । यदत्र त्वया वक्तव्यं विशेष्यपदगतवैलक्षण्यमादायैव ज्ञानगतवैलक्षण्यमङ्गीकर्त्तव्यमिति, तन्न । द्रव्यस्य ज्ञानविषयत्वाङ्गीकारे तस्य विशेष्यत्वसम्भवात् । तथाहि 'द्रव्य'मितिज्ञाने द्रव्य विशेष्यं, द्रव्यत्वं विशेषणं, समवायश्च सम्बन्ध । 'द्रव्य'मित्याकारकभ्रमज्ञाने तु द्रव्यत्व विशेषण सम्बन्ध समवायो, विशेष्यं च द्रव्यातिरिक्तपदार्थोऽपि भवेत् । समवायस्य द्रव्यस्वरूपत्वे तज्ज्ञानस्य विषयार्थं यदुपयो-

गिद्रव्यं तत्सकलद्रव्यस्य विद्यमानताङ्गीकर्त्तव्या। तत्सकलसत्त्वेऽपि द्रव्यं ज्ञानविषयीभूतं न भवति। समवायस्य तद्भ्रमविषयीभूतत्वेऽपि द्रव्यस्य तद्भ्रमविषयत्वे कारणाभावात्। यत्र समवायः पृथक्पदार्थ एवेति निर्णीत भवति तत्र द्रव्यस्य विषयत्वाभावेऽपि द्रव्यत्वोपस्थितिमूलक-भ्रमो भवितुं न पारयेत्। सुतरां समवायसम्बन्धो द्रव्यातिरिक्तपदार्थ एवेति वाच्यम्। नाप्यस्यानेकत्वं सम्भवति। गौरवदोषापत्तेः। विशे-ष्यविशेषणभेदमन्तरेण समवायभेदमादाय ज्ञानवैलक्षण्यबोधाभावाच्च। गौतमीयास्तावत्समवायस्य प्रत्यक्षयोग्यत्वं नाङ्गीकुर्वन्ति, वैशेषिका-स्त्वस्यातीन्द्रियत्वेनानुमेयत्वमिति वदन्ति।

पु०—पितः! भवतु तर्हि, साम्प्रतं पूर्वोक्ताभावपदार्थनिर्णयेनानु-ग्राह्यः।

पि०—वत्स! भावपदार्थानामभाव एवाभावपदार्थ इति केचित् [redacted] तन्मतेऽसावेक एव। किन्तु 'द्रव्यादिषट्कान्योन्याभाववत्त्वमभावत्व'मित्य-भावलक्षणम्। 'द्रव्यं न' 'गुणो ने'त्याद्याकारेण यत्र पदार्थषट्कस्यान्यो-न्याभावस्तिष्ठति [redacted] एवाभावपदार्थः। स च द्विविधः। संसर्गाभावा-न्योन्याभावभेदात्। तत्र 'अन्योन्याभावभिन्नत्वं संसर्गाभावत्वमि'ति संसर्गाभावलक्षणम्। एतदभावोऽपि त्रिविधः। प्रागभावप्रध्वंसाभावा-त्यन्ताभावभेदात्। तत्र 'कार्योत्पत्तिपूर्वकालावच्छेदेनानादित्वे सति सान्तत्वं च सत्यभावत्वं प्रागभावत्वमि'ति प्रागभावलक्षणम्। सादि-घटादिद्रव्यमात्रेऽतिव्याप्तिवारणाय प्रथमसत्यन्तपदोपादानम्। तेषां सान्तत्वेऽप्यनादित्वाभावात्तत्र नातिव्याप्तिः। परमाण्वादावतिव्याप्ति-वारणाय द्वितीयसत्यन्तपदोपादानम्। तेषामनादित्वेऽपि सान्तत्वाभावान्न तत्रातिव्याप्तिः। कार्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारण एवासाव-

भावस्तिष्ठति। घटरूपकार्योत्पत्तेः प्राक् घटसमवायिकारणकपालयोर्घटाभावस्य वस्त्रादिरूपकार्योत्पत्तेश्च प्राक् वस्त्रसमवायिकारणसूत्रेषु घटाभावस्य सत्त्वात्। स्वपदेनात्र प्रागभावस्तत्प्रतियोगी घटादिस्तत्समवायिकारणं कपालादिस्तत्रैव प्रागभावस्तिष्ठतीति तदर्थ। घटादिकार्यनिर्माणानन्तरं कपालादिकारणगततत्तदभावो नक्ष्यत्येव। "सादित्वे सत्यनन्तत्वं प्रध्वसत्व"मिति प्रध्वसाभावलक्षणम्। सादित्वगगनादिपदार्थेऽतिव्याप्तिवारणायानन्तत्वपदोपादानम्। तेषामनित्यत्वेनानन्तत्वाभावान्न तत्रातिव्याप्तिः। आत्मादिनित्यपदार्थेष्वतिव्याप्तिवारणाय सादिपदोपादानम्। तथा नित्यत्वेनानन्तत्वेऽपि सादित्वाभावान्न तत्रातिव्याप्तिः। स चाभावो घटो ध्वस्त इत्यादिरूप। असौ घटादिध्वसरूपकार्योत्पत्त्यनन्तरं स्वप्रतियोगिघटादिसमवायिकारणकपालादावेवावतिष्ठते। घटादिकार्यभङ्गानन्तरं कपालयोर्घटाभावस्य पञ्चीवरानन्तरं च तत्कारणसूत्रेषु पटाभावस्य पट प्रध्वसस्य चोत्पत्तेस्तत्रैव तत्सत्त्वाङ्गीकारात्। प्रागभावप्रध्वसाभावयोरनित्यत्वमवधेयम्। 'नित्यससर्गाभावत्वमत्यन्ताभावत्व'मित्यत्यन्ताभावलक्षणम्। स च 'भूतले घटो नास्ती'त्यात्मक। न चास्य प्रागभावप्रध्वसाभावयोरतिव्याप्तिः। तयोरनित्यत्वात्। न च प्रथमोक्तप्रागभावोऽपलपितव्य। घटादिकार्योत्पत्तेः प्राक् कपालादौ तदभावप्रत्यक्षात्। घटादिकार्योत्पत्तेः प्राक् घटाद्यस्तित्व नाङ्गीकर्तव्यम्। तदानीं तत्तन्निष्ठगुणक्रियादिप्रत्यक्षप्रसङ्गात्तेनैव जलानयनादिकार्यनिष्पत्तिप्रसङ्गाच्च। नापि प्रध्वसाभावोऽपलपितव्य। परिदृश्यमानघटपटादौ मुद्गराघाताघातादिना तत्तद्वस्तुनश्चूर्णीभावादिदर्शनात्। सत्पदार्थभूतघटादौ सत्पदार्थासदवस्थात्मकप्रध्वसस्य तदानीं तत्रानुभवात्। यदत्र वक्तव्यं प्रागभावप्रध्वसाभावौ घटादिकार्याणामेकैकावस्थाविशेषावेवेति। तन्न। अवस्थाया कार्यधर्मत्वेन कार्य-

पि०—वत्स ! "तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वमन्योन्याभावत्व"मित्यन्योन्याभावलक्षणम् । तादात्म्यसम्बन्धपदेन स्वस्मिन् स्ववृत्तिनियामकसम्बन्धो ज्ञेयः । स्वस्मिन् निजस्योपरि स्वस्य निजस्य वृत्तिरवस्थानं तत्र यो नियामकसम्बन्धो निश्चितसम्बन्धोऽर्थात् निजस्योपरि स्वयं यत्सम्बन्धेन तिष्ठति तत्सम्बन्ध एव तादात्म्यसम्बन्धः । एतेन घटो घटे, पटः पटे, मनुष्यश्च मनुष्ये तादात्म्यसम्बन्धेन तिष्ठतीति 'घटः पटो न, मनुष्यो न गौः' इत्याद्याकारेण घटभेदः पटे, मनुष्यभेदश्च गवि तिष्ठतीति तादृशाभाव एव तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकान्योन्याभाव इति लक्षणसमन्वयः । अन्योन्याभावपदेन भेदो ज्ञेयः । अन्योन्यस्मिन् परस्परेऽन्योन्यस्य परस्परस्याभावो भेदोऽन्योन्याभाव इति तत्पदनिरुक्तेः । यथा घटे पटस्य भेदः सदा तिष्ठति तथा पटे घटभेदोऽपि, ममगाभाव भेदो सम्भवति । घटादौ भूतलाभावे विद्यमानेऽपि भूतले घटादेः कदाचित्सत्त्वसम्भवेन सदाभावाभावात् ।

रूपेण गृहीततया तत्तत्कार्यं प्रति दण्डादीनां कारणत्वेऽपि तद्गतदण्डत्वादि-धर्माणां निष्प्रयोजनत्वेनान्यथासिद्धत्वात्। 'यत्कार्यं प्रति यस्य स्वातन्त्र्येणा-न्वयव्यतिरेकाभावेऽपि तत्कारणमादायैवान्वयव्यतिरेकसम्भवोऽसौ द्वितीया-न्यथासिद्धः। यथा घटादिकार्यं प्रति दण्डादिगतरूपादिकम्। घटादि-कार्यनिष्पत्तौ तेषां स्वातन्त्र्येणान्वयव्यतिरेकाभावेऽपि तद्गतरूपादिकारणी-भूतदण्डादिकमादाय 'रूपादिविशिष्टदण्डादिकारणसत्त्वे घटादिकार्यसत्त्व'-मित्यन्वयेन 'तादृशदण्डादिकारणाभावे घटादिकार्याभाव' इति व्यतिरेकेण च तेषां तत्तत्कार्यपूर्ववृत्तित्वसम्भवात्। "यस्यान्यकार्यं प्रति प्रथमं पूर्ववृत्तित्वग्रहणानन्तरं पश्चात्तत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तत्कार्यं प्रति तदन्यथासिद्ध"मिति तृतीयान्यथासिद्धः। यथा घटादिकार्यं प्रत्याकाशः। 'शब्दसमवायिकारणत्वमाकाशत्व'मित्याकाशलक्षणानुसारेण तस्य शब्दं प्रति प्रथमं कारणत्वग्रहणानन्तरं पश्चात् घटादिकार्यं प्रति कारणत्वाङ्गीकरणस्य निष्प्रयोजनत्वात्। कारणमात्रस्य कार्यमात्रं प्रति येन केनापि सम्बन्धेन नियतपूर्ववृत्तित्वस्य वक्तुं शक्यतया-काशस्यापि घटादिकार्यनिष्पत्तौ कारणत्वाभ्युपेयत्वेऽप्यन्यथासिद्धत्व-मेव। "यत्कार्यजनकं प्रति यस्य प्रथमं पूर्ववृत्तित्वं गृहीत्वैव पश्चात् पुनस्तस्य कार्यान्तरं प्रति पूर्ववृत्तित्वं गृह्यते असौ तत्कार्यान्तरं प्रत्यन्यथासिद्ध" इति चतुर्थान्यथासिद्धः। यथा घटादिकार्यं प्रति कुलालजनकादिः। तस्य कुलालादिजनकत्वरूपेण कुलालं प्रति प्रथमं कारणत्वाङ्गीकारानन्तरं पश्चात् पुनर्घटादिकार्यं प्रति तस्य कारणत्वाङ्गीकरणस्य निष्प्रयोजनत्वात्। नास्य कुलालादित्वरूपेणा-न्यथासिद्धत्वम्। कुलालादिमात्रस्य घटादिकार्यनिष्पत्तौ कारणत्वाङ्गी-कारात्। घटादिरित्यत्रादिपदेन पटादीनां कुलालादिरित्यत्रादिपदेन

च तन्तुवायादीनां ग्रहणम्। अवश्यक्लृप्तनियतावश्यकपूर्ववृत्तिपदार्थभिन्न-यावत्पदार्थाश्च पञ्चमान्यथासिद्धाः। यथा घटादिकार्यनिष्पत्तौ रासभादयः। कार्योत्पत्तौ तेषां कदाचिद्घटनिर्माणकाले नियतपूर्ववृत्तित्वसम्भवेऽपि घटमात्रनिर्माणकाले नियतपूर्ववृत्तित्वाभावात्। आदिपदेनात्र प्रत्यक्षं प्रत्यनेकद्रव्यत्वस्य ग्रहणम्। महत्त्वमन्तरेण प्रत्यक्षानुपपत्त्यावश्यं महत्त्वं कल्पनीयम्। प्रत्यक्षात्प्राक् नियतपूर्ववृत्तिमहत्त्वमन्तरेण प्रत्यक्षासम्भवात्। अतः प्रत्यक्षं प्रति महत्त्वस्याऽपि कारणता। न च महत्त्ववदनेकद्रव्यत्वस्यापि प्रत्यक्षकारणताङ्गीकर्तव्या। अनेकद्रव्यत्वकल्पनायां गौरवान्महत्त्वरूपजातेः कारणतावच्छेदकत्वाङ्गीकारे च लाघवात्। पूर्वोक्तपञ्चविधान्यथासिद्धेष्वन्तिमस्यैवावश्यकता नेतरेषाम्। तेनैवापरापरचतुर्विधानां चारितार्थ्यात्। यथा घटकार्योत्पत्तौ दण्डत्वदण्डरूपाकाशकुलालजनकानेकद्रव्यत्वरासभा अन्यथासिद्धास्तथापरापरकार्येष्वप्यन्यथासिद्धपदार्था अनुसन्धेयाः।

पु०—पितरः!—संक्षेपतः—प्रागुक्तद्रव्यादिपदार्थसाधर्म्यवैधर्म्यप्रकारः साम्प्रतमत्र विस्तरेणोपवर्णनीयः।

पि०—वत्स! द्रव्याणां समवायिकारणत्वं, गुणकर्मणामसमवायिकारणत्वं, परमाण्वाकाशादिनित्यपदार्थानामनाश्रितत्वं, क्षित्यादिनवद्रव्याणां द्रव्यत्वगुणवत्त्वे, क्षितिजलतेजोवायुमनसां परत्वापरत्वमूर्तत्वक्रियावत्त्ववेगवत्त्वानि, आकाशकालदिगात्मनां व्यापकत्वपरममहत्परिमाणवत्त्वे, क्षित्यप्तेजोमरुद्व्योम्नां भूतत्वं, क्षित्यप्तेजोमरुतां स्पर्शवत्त्वद्रव्यारम्भकत्वे, आकाशजीवात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं, पृथिवीजलतेजसां रूपवत्त्वद्रवत्ववत्त्वप्रत्यक्षविषयत्वानि, पृथिवीजलयोर्गुरुत्वरसवत्त्वे, पृथिवीतेजसोर्नैमित्तिकद्रवत्ववत्त्वं, पृथिवीजलतेजो-

* वाय्वाकाशकालजीवात्मनां च विशेषगुणवत्त्वं साधर्म्यम्। समानो धर्मो येषां ते सधर्माणस्तेषां भावः साधर्म्यं समानो धर्मः। विरुद्धो धर्मो येषां ते विधर्माणस्तेषां भावो वैधर्म्यं विरुद्धो धर्मश्चेति फलितार्थः। आश्रितत्वं समवायादिसम्बन्धेन वृत्तित्वं, मूर्त्तत्वं परिच्छिन्नपरिमाणवत्त्वं क्षुद्रबृहदन्यतरपरिमाणविशिष्टत्वमिति यावत्, अव्याप्यवृत्तित्वं स्वाधिकरणैकदेशवृत्तित्वं, क्षणिकत्वं तृतीयक्षणविनाशित्वं, भूतत्वं तु बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वमित्यर्थः। अत्र यद्यत्पदार्थानां यद्धर्माः साधारणधर्माकारेणोक्तास्तद्धर्मा एव तदितरपदार्थानां वैधर्म्याणि विरुद्धधर्मा वेति ज्ञेयम्।

पु०—पितरः! भवतु तर्हि, निगद्यतां तावदिदानीमत्र कृपया, कया रीत्या क्षित्यादिद्रव्यचतुष्टयस्य द्रव्यारम्भकत्वं स्वीक्रियत इति।

पि०—वत्स! परिदृश्यमानस्यास्य जगत उपादानकारणासमवायिकारणयोः प्रदर्शनार्थं पदार्थमात्रस्य नित्यानित्यभेदेन द्विधाविभागः कृतः कणादमहर्षिणा। तत्र स्थूलद्रव्यमात्रस्योपादानकारणीभूतपरमाणुसमूहो नित्यस्तदितरसकलश्चानित्यः। क्षित्यप्तेजोवायूनामेव परमाणूनङ्गीकृत्य तेषामतीन्द्रियत्वेनेन्द्रियाग्राह्यत्वमन्त्यावयवत्वेनाविभाज्यत्वं, द्व्यणुकादिक्रमेण बृहद्बृहदवयवसमूहात्स्थूलपृथिव्यादिपदार्थोत्पत्तिदर्शनेन च कार्यानुमेयत्वमङ्गीकृतं तेन। तथाहि वायुवेगसन्ततचालितपरमाणुपुञ्ज ईश्वरेच्छया क्रमशः सम्मिलितः सन् द्व्यणुकादिक्रमेण मृत्पिण्डाद्याकारान् धत्ते। असौ परमाणुपुञ्जोऽस्मत्समीपेऽधऊर्द्ध्वं प्रदेशे निरन्तरं घूर्णन्नप्यस्मद्दृष्टिगोचरो न भवति, नाप्यस्माकमुपरि पतति। परमाणुसम्मेलनविषयकेश्वरप्रयत्नस्य फलोन्मुखीनत्वाभावे तत्तत्परमाणुसम्मेलनेन तेषां बृहदाकारधारणाभावात्। स्थूलपृथिव्यादिकार्यद्वारैव नित्यपरमाणूनामीश्वरस्य चानुमानं भवति। येन केनापि कार्येणैव नित्यसत्पदार्थानुमानात्।

इत्थं जलीयादिपरमाणुष्वपि तत्तत्स्थूलद्रव्यारम्भकत्वं निर्णेतव्यम्। किञ्च परिदृश्यमानजलगतशुक्लरूपादिदर्शनेन जलीयपरमाणुषु शुक्लरूपादिकमप्यनुमेयम्।

पु०—पितः! तथापि परमाणूनां जगदारम्भकत्वं मया नाङ्गीकर्तव्यम्। बीजध्वंसादेवाङ्कुरादिकार्योत्पत्तिदर्शनेनाभावस्यैव जगदारम्भकत्वाङ्गीकारे कार्यसिद्धेः।

पि०—वत्स! बौद्धैकदेशिदार्शनिकमतानुसारेण यदुक्तं त्वया, तदसत्। नित्यसत्पदार्थस्य कारणत्वानङ्गीकारे कार्यस्य नित्यसत्पदार्थानुमापकत्वहाने। अभावपदार्थस्य जगत्कारणत्वं नैव सम्भवति। अभावस्वरूपे इतरविशेषत्वाभावाज्जगति स्वरूपतः किमपीतरविशेषत्वानवस्थानप्रसङ्गात्। कपालध्वंसेन घटस्य, बीजध्वंसेन चाङ्कुरस्योत्पत्तिर्भवत्येव। पदार्थानामसत्तैवाभावपदार्थः। तत्र किमपीतरविशेषो नैव परिलक्ष्यते। यथा प्रथमं किमप्येकं निर्जनस्थानं गतवतो पश्चात्प्रस्था धृतयोः पुरुषयोस्तत्र तयोरसत्ताभावो वा तिष्ठति, तदुभयाभावस्य किमपि विशेषत्वाभावात्तत्र कार्य्यवैलक्षण्यं किमपि न दृश्यते। अस्मन्मते तु कार्यगतवैलक्षण्यं प्रति कारणगतवैलक्षण्यस्यैव कारणत्वम्। पृथिव्यादिकारणपरमाणुगतरूपरसादियावद्गुणानां स्थूलपृथिव्यादौ याथातथ्येन विद्यमानत्वदर्शनात्। आधुनिकवैज्ञानिकैर्वायोरपि गुरुत्वमङ्गीक्रियत इति यत्तद्वयं नाङ्गीकुर्मः। तत्र जलीयपरमाणुसंयोगस्य विद्यमानत्वेनैव तत्परमाणुपुञ्जगतगुरुत्वमादाय वायावपि गुरुत्वानुभवात्। वस्तुतस्तत्र गुरुत्वं नास्ति। पृथिवीजलयोरेव गुरुत्वगुणवत्त्वात्। अभावस्य शून्यस्य वा जगत्कारणत्वाङ्गीकरणमनुचितमेव। कारणगुणादेव कार्य्यगुणस्यावयववैचित्र्यादवयविवैचित्र्यस्य, जगत्कारणपरमाणुगतगुणभेदमादाय तत्कार्य-

स्थूलपृथिव्यादेर्विभिन्नद्रव्याणां चोत्पत्तेः। यदत्र वक्तव्यं प्रदर्शितकारण-कूटसत्त्वेऽप्यभावस्यैव जगत्कारणत्वमङ्गीकर्तव्यमिति। तन्न। कार्य-मात्रस्याकस्मिकत्वापत्तेः। तादृशाकस्मिकतायाः सर्वत्र समत्वेन मृत्पिण्डादेः सौवर्णकटककुण्डलादीनां, सुवर्णादेश्च पार्थिवघटपटादीनामुत्पत्ति-प्रसङ्गात्। अत्र कारणपदेनोपादानकारणस्य कार्यपदेन चोपादेयकार्यस्य ग्रहणम्।

पु०—पितरः! तथापि परमाणूनामनित्यत्वेन तेषां जगत्कारणत्व-मनङ्गीकृत्याभावस्य शून्यस्य वा जगत्कारणत्वं मयाङ्गीकर्तव्यम्। अनित्य-पदार्थस्य जगत्कारणत्वाङ्गीकारे तथाविधकारणानामपि कारणान्तरापेक्षा-सम्भवेनानवस्थादोषापत्तेः। अङ्गशास्त्रेऽविभाज्यपदार्थस्यांशासम्भवेन यत्राविभाज्यमागमस्तत्रैव 'शून्य'मिति स्वीकारात्तादृशशून्यपदार्थस्यात्र जगत्कारणत्वाङ्गीकारे न कापि हानिरिति ज्ञेयम्।

पि०—वत्स! बौद्धमतानुसारेण यत्पूर्वपक्षीकृतं त्वया तदस्माभि-र्नाङ्गीक्रियते। त्वदुक्तानवस्थाभियात्र विवेचकैरस्माभिः परमाणूना-मेवाविभाज्यत्वनित्यत्वे स्वीकृत्य तेषामेव जगत्कारणत्वाङ्गीकारात्। शून्यस्यैव जगत्कारणत्वमिति बौद्धमतानुसारेण यदुक्तं त्वया तदसत्। असदर्थबोधकत्वेनासद्वस्तुभूतशून्यपदार्थस्य नित्यत्वाङ्गीकरणस्यात्र भ्रम-त्वात्। शून्यमेवासत्पदार्थः। सद्वस्तुन एव निषेधः सम्भवति ना-सद्वस्तुनः। आकाशकुसुम-शशविषाणादीनामसत्पदार्थत्वेन यथा तेषां निषेधो न सम्भवति, तथा सद्वस्तुशून्यपदार्थस्यापि। शून्यात्मकासत्पदार्था-त्परिदृश्यमानघटपटादियावत्पदार्थानामुत्पत्तिः कदाचित्कथंचनापि नैव सम्भवति। अतः परमाणूनामेव जगत्कारणत्वमङ्गीकर्तव्यम्। सद्वस्तुभ्य-स्तेभ्य एव तथाविधसद्वस्तूत्पत्तिसम्भवात्। अङ्गविषये यदुद्दङ्कितं त्वया

तदप्यसत्। द्रव्याणामुपादानोपादेयभावस्य शून्यपदार्थविभागस्य चैकत्वासम्भवात्। अदृष्टान्तेन परमाणुपदार्थकल्पनमयुक्तम्। तत्राद्धेऽविभाज्यत्वं तिष्ठतु न तिष्ठतु वा, तस्मात्किमप्याकृतिविशिष्टपदार्थानुत्पत्तेः। दार्ष्टान्तिकस्थले पृथिव्यादिपदार्थचतुष्टयस्याविभाज्यांशकल्पनमयुक्तम्। पर्वतसर्षपयोस्तुल्यपरिमाणापत्तेः। तदुभयपदार्थावयवानामानन्त्येन न तदपराधः। किञ्च शून्यात्मकपदार्थाज्जगदुत्पत्तिस्वीकरणमयुक्तमेव। तदुत्पन्नवस्तुन किमपि वैचित्र्यानुत्पत्तिप्रसङ्गात्सर्वत्र सर्वविधकार्योत्पत्तिप्रसङ्गाच्च। अत शून्यस्य नित्यत्व परमाणूनां चानित्यत्वमित्यङ्गीकरणमनुचितमित्यवधेयम्।

पु०—पूज्यपादाः। यदुक्तं प्राग् भवद्भिः परमाणूनां नित्यपदार्थत्वेन सत्पदार्थत्वेन च तेभ्य एव स्थूलपृथिव्याद्युत्पत्तिरिति, तत्राहं किञ्चित् विचारयामि 'कारणगतयावद्धर्माणां कार्यमात्रनियतपूर्ववृत्तित्व'मिति नियमबलेनाप्रत्यक्षीभूतपरमाणूनामपि स्थूलपृथिव्यादिकार्याणामप्यप्रत्यक्षत्वं युक्तिसिद्धम्। अप्रत्यक्षीभूतपदार्थ एवासत्पदार्थः। तथा सति भवन्मतेऽप्रत्यक्षपरमाणूनां कारणत्वाङ्गीकारवत् बौद्धमतेऽप्यप्रत्यक्षशून्यपदार्थस्य जगत्कारणत्वाङ्गीकारे न कापि हानिः। परमाणुशून्ययोरप्रत्यक्षत्वसाम्यादिति।

पि०—वत्स! प्रत्यक्षयोग्यत्वं तु न गुणपदार्थः, किन्तु धर्म एव। सोऽस्माभिः कार्येषु कारणगतसकलगुणानामस्तित्वमङ्गीक्रियते। कार्यकारणोभयगतभेदानुपलम्भापत्तेः। किन्तु कतिपयाने कार्यकारणयोराकारगतभेददर्शनेन तयोः कियन्मात्र परस्परभेदसत्त्वेऽपि न कापि हानिः। किञ्च प्रत्यक्षं प्रति महत्त्वसहकृततया एव कारणतेति साङ्गीक्रियतेऽस्माभिः। अप्रत्यक्षीभूतपरमाणुशून्ययोरुभयोरसत्त्वापत्तेः। नैवं सम्भवति कथञ्चित् 'पूर्वं सूक्ष्मावयवाधिकावयववर्त्ति भवति, तदणुभावपरित्यागेनोद्भूत-

रूपादिगुणविशिष्टं सच्चक्षुरादीन्द्रियग्राह्यं भवति नान्यथे'ति नियमात्। नैव निरवयवानां परमाणूनां प्रत्यक्षयोग्यत्वं सम्भवति। महत्परिमाणोद्भूतरूपाभ्यामन्तरेण कस्यापि वस्तुनः प्रत्यक्षत्वाभावात्। नास्त्येवं परस्परसाम्यं परमाणुशून्ययोः। द्रव्यप्रत्यक्षं प्रत्युद्भूतरूपस्पर्शमहत्परिमाणानामेव कारणत्वेनासत्पदार्थस्य शून्यस्योद्भूतरूपादिविशिष्टत्वासम्भवात्। यथान्धकाराद्यावृतस्थलगतोद्भूतरूपादिविशिष्ट-घटपटादियावत्पदार्थानामप्रत्यक्षत्वेऽपि तत्तत्स्थलेषु तत्तद्वस्तुसत्तास्वीकारस्तथा सत्पदार्थपरमाणूनां विद्यमानत्वेन तेषूद्भूतरूपादिगुणासत्त्वात्तत्प्रत्यक्षाभावेऽपि तदस्तित्वस्वीकार इति दिक्।

पु०—पितरः! परमाणूनां महत्परिमाणाभावमादायाप्रत्यक्षत्वेऽपि तद्गतरूपरसादिगुणानां प्रत्यक्षत्वं मयाङ्गीकर्तव्यम्। 'आश्रयाप्रत्यक्षे तद्गतगुणानामप्यप्रत्यक्षत्व'मित्यत्र वायोरप्रत्यक्षत्वेऽपि तद्गतस्पर्शस्य, लवणशर्करादिमिश्रितजलादिगततत्तद्द्रव्याप्रत्यक्षेऽपि तज्जलादिगतरसस्य, रक्तनीलपीतादिवर्णविशिष्टद्रव्यादिमिश्रितजलादौ तत्तद्द्रव्यसत्ताप्रत्यक्षाभावेऽपि तत्तद्रक्तादिवर्णमात्रस्य च प्रत्यक्षत्वत्परमाण्वात्मकाश्रयद्रव्यप्रत्यक्षाभावेऽपि तद्गतरूपरसादिप्रत्यक्षसम्भवात्।

पि०—वत्स! केषांचित्प्राचीनानां नये द्रव्यप्रत्यक्षं प्रति महत्परिमाणोद्भूतरूपोद्भूतस्पर्शानां कारणता, तत्परवर्तिग्रन्थकाराणां नये प्रत्यक्षं प्रति महत्परिमाणस्य सामान्यकारणता, चाक्षुषप्रत्यक्षं प्रत्युद्भूतरूपस्य, त्वाचप्रत्यक्षं प्रत्युद्भूतस्पर्शस्य च कारणतास्मन्मते च पृथिवीप्रत्यक्षं प्रत्युद्भूतरूपोद्भूतस्पर्शयोः, पृथिवीतरद्रव्याणां चाक्षुषप्रत्यक्षं प्रत्युद्भूतरूपस्य, स्पार्शनप्रत्यक्ष प्रत्युद्भूतस्पर्शस्य च कारणताङ्गीकृतास्ति। तेन त्वदुक्तदिशा परमाणुगतरूपरसादिगुणानां प्रत्यक्षयोग्यत्वमस्मन्मते न सम्भवति। तथाहि रूपाद्याश्रयस्य महत्परिमाणविशिष्टत्वे रूपादीनां

वोद्भूतत्वे तत्प्रत्यक्षं भवति नान्यथा। उद्भूतत्वमेव रूपादीनां विशेषधर्मः। तत्तु सकलरूपादौ नैव तिष्ठति। वायुः पुष्पादीनां क्षुद्रक्षुद्रकणिकामाहृत्य सौरभं वितरतीति दृष्टचरम्। नीरूपवस्तुनः पृथिव्यशत्वासम्भवनावश्यं तत्कणिकासु रूपाद्यस्तित्वमङ्गीकर्त्तव्यम्। किन्तु तद्गत रूपादीनां प्रत्यक्षं न भवतीति। अत्र मम—तथात्वे तद्गतगन्धस्यापि घ्राणजप्रत्यक्षं न स्यात्। अलक्तकादिमिश्रितजलेऽलक्तकादिपदार्थक्षुद्रांशाप्रत्यक्षेऽपि तेषां पार्थिवपदार्थत्वेन तद्गतरूपादिप्रत्यक्षं भवत्येव। किन्तु तत्रोद्भूतस्पर्शो नास्ति। पृथिव्याश्चाक्षुषप्रत्यक्षं प्रत्युद्भूतस्पर्शस्यापि कारणताङ्गीकृतास्ति। चाक्षुषप्रत्यक्षं प्रत्युद्भूतस्पर्शस्य कारणत्वमनङ्गीकुर्वता नवे स्वल्पकणात्मकपार्थिवांशस्य जलेन सह मिश्रणेन तस्य जलाभिभूततया तत्प्रत्यक्षं नैव भवति। मिश्रणेन सति जलाभिभूते दुग्धे तदर्धौ जलदुग्धयोः पृथक्त्वाप्रत्यक्षवत्केनाप्यभिभूतवस्तुनः पृथक् प्रत्यक्षत्वाभावात्। अतः परमाणुषु महत्परिमाणविशिष्टत्वाभावादेव तद्गतरूपादीनां चाक्षुषादिप्रत्यक्षयोग्यत्वाद्यभावो न रूपाद्यभावप्रसादादेवेति निर्णयम्।

पु०—पितर! परमं महत्परिमाणविशिष्टद्रव्यस्यापि क्रियावत्त्वं मयाङ्गीकर्त्तव्यम्। 'एतद्दिकस्थवृक्षादयः कम्पन्ते' इत्याकारकज्ञानसद्दर्शनेनैतस्या एव दिशो वृक्षादिकम्पाश्रयत्वागमत्वात्।

पि०—वत्स! दिशः कम्पाद्याश्रयत्वमादाय क्रियावत्त्वं नादरणीयम्। 'दक्षिणस्यां दिशि सुगन्धिर्वहतीति वाक्यात् 'दक्षिणा दिक् सुगन्धिविशिष्टे'त्याकारकशाब्दबोधस्याप्युचितत्वापत्तेः। दिशः सुगन्धिविशिष्टत्वं कथमपि न सम्भवति। सुगन्धस्य पार्थिवपुष्पादिद्रव्यनिष्ठत्वेन तद्द्रव्यधर्मत्वाङ्गीकारात्। अतः स्पन्दनात्मिका क्रिया न दिङ्निष्ठा, किन्तु वृक्षादिनिष्ठैव। तत्तद्दिक्षु कम्पनाद्यधिकरणज्ञानस्य दैशिकसम्बन्ध

मूलकत्वेन समवायसम्बन्धमूलकत्वाभावात्। क्रिया द्रव्येषु समवायसम्बन्धेनैव तिष्ठति, नान्येन केनाप्यपरसम्बन्धेन। दिशो द्रव्यत्वेऽपि तत्र कम्पनादिक्रिया न सम्भवति। तस्या व्यापकद्रव्यत्वात्।

पु०—पितर ! मास्तु वा क्रियावत्त्व दिश, किन्तु कालस्य क्रियावत्त्व मयाङ्गीकर्त्तव्यम्। 'तत्काल एतत्काले वा मलयपवनो वाति' इत्यादौ तत्कालस्यैतत्कालस्य वा गमनादिक्रियाकारणत्वेन तत्र तद्गुत्व सम्भवात्।

पि०—वत्स ! न चैव वक्तु शक्यते। कालिकसम्बन्धेन काले स्पन्दनादिक्रियासम्भवेऽपि समवायसम्बन्धेनासम्भवतया तस्य व्यापकत्वेन च निष्क्रियत्वाङ्गीकारात्।

पु०—पितर ! तिष्ठतु तर्हि, साम्प्रत विवदिषामि—यदुक्त प्राक् भवद्भि गुणकर्मणोरसमवायिकारणत्वं साधर्म्यमिति तन्मया नाङ्गीकर्त्तव्यम्। ज्ञानादिगुणानामसमवायिकारणत्वाभावेन तस्य तेष्वव्याप्ते।

पि०—वत्स ! न चैव वक्तु शक्यते। तत्रासमवायिकारणत्व पदस्य 'असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्व'मित्यर्थकरणेन तद्दोषनिरासात्। य कमप्यसमवायिकारणगुण धृत्वा तन्निष्ठसत्ताभिन्नगुणत्वजाते सकलगुणेषु विद्यमानतया ज्ञानादिष्वपि तद्वृत्तेरिति लक्षण समन्वय।

पु०—पितर ! अस्तु तर्हि, साम्प्रतमत्र मामकीनैव पिपृच्छिषा जागर्ति, यत्पृथिव्यादिद्रव्यचतुष्टयस्यानित्यांशे पार्थिवादिशरीराणामुत्पत्तिप्रकार सक्षेपतो यदुक्त प्राक् तस्य विस्तृतिभावप्रकार पुन कीदृश इति।

पि०—वत्स ! शरीरोत्पत्तिमुपजीव्य कतिपयविषयास्तत्तत्स्थलेषु प्रदर्शिता, साम्प्रतमत्रावशिष्टविषया प्रदर्श्यन्ते। यथाश्राहुर्वैदान्तिन ते खलु

वक्ष्यमाणदिशा पञ्चमहाभूतानां पञ्चीकृतत्वं, भूतत्रयस्य त्रिवृत्कृतत्वं चाङ्गीकृत्य तत एव स्थूलद्रव्योत्पत्त्या तत्तद्भूतानामेव स्थूलद्रव्यसमवायिकारणत्वमङ्गीकुर्वन्ति । एतद्विषये पञ्चदश्यां विद्यारण्यस्वामिपादैर्नोक्तम् । "द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते" इति । अपञ्चीकृतानामम्मिश्रीकृतानां चाकाशाग्निवायुजलपृथिव्यात्मकपञ्चमहाभूतानां मध्यात्प्रत्येकमप्येकभूतं प्रथमं द्विधा विभज्य तत एकभागं निजार्थं सरक्ष्य पराद्धांशं पुनश्चतुर्धा विभज्य ततः एकैकभागमपरापरभूतचतुष्टये विमिश्रयेत् । यथाकाशं द्विधा विभज्य निजार्थं संरक्षितेन स्वार्द्धांशेन सहाग्निवायुजलपृथिव्यात्मकापरापरभागचतुष्टयात्प्रत्येकैकैकांशमादाय सम्मेलनेनासौ पृथिवी यथा सम्पूर्णतामापद्यते, तथान्यान्यभूतानामपि पूर्णता निर्णेया । सकलभूतेषु स्वस्वार्द्धांशेऽपरापरभूतानामेकैकांशस्तिष्ठतीति प्रथमम् । न चाकाशादिभूतेषु तदितरप्रत्येकभूतस्यैकैकांशविद्यमानतामादाय निजनिजसंज्ञाव्याघात शङ्कनीयः । तेषु प्रत्येकमपरापरभूतांशसत्त्वेऽपि स्वस्वांशाधिक्यसत्त्वात् । यस्मिन् भूते यदंशाधिक्यमस्ति तद्भूतं तदंशाधिक्येन तत्संज्ञां लभते । अस्मत्स्थूलशरीरमन्नमयकोष इति वेदान्तिनो निगदन्ति । अन्नमयकोषस्तु पञ्चीकृतपञ्चमहाभूतेभ्यः समुत्पद्यते । तस्य कोष इत्युच्छरीरस्याच्छादकत्वेन कोषसंज्ञालाभः । यथा कोषकारकीटः कोषं निर्माय तत्कोषाच्छादितः सन् बहुक्लेशमनुभवति, तथाऽविद्यावशेन पञ्चकोषाच्छादितो जीवात्मा स्व-स्वरूपविस्मरणेन सांसारिकविविधकन्दनमनुभवति । स च कोषः पञ्चविधः । अन्नमय प्राणमय-मनोमय विज्ञानमयानन्दमयभेदात् । तत्रान्नमयकोषस्त्वुक्तः, लिङ्गशरीरमध्यगतरजोगुणविकारभूतवाक्पाणिपादपायूपस्थात्मककर्मेन्द्रियपञ्चकेन सह प्राणादिनिर्मितः कोषः प्राणमयकोषः, सत्त्वगुणकार्यभूतचक्षुराण

कर्णनिह्वात्वगात्मकज्ञानेन्द्रियपञ्चकेन सह संशयात्मकमनःसम्मेलनेन निर्मितः कोषो मनोमयकोषः। पूर्वोक्तज्ञानेन्द्रियपञ्चकेन सह निश्चयात्मकबुद्धिसम्मेलनेन निर्मितः कोषो विज्ञानमयकोषः, कारणशरीरभूताविद्यानिष्ठप्रीत्यामोदादिभिः सह मलिनसत्त्वगुणसम्मेलनेन निर्मितः कोषः आनन्दमयकोषश्चेति। जीवात्मा यदा यत्कोषाभिमानी भवत्तदानीं तत्कोषमयो भवति। तथाप्यसौ कोषपञ्चकात्पृथगेव। एकत्रीभूतप्राणमयमनोमयविज्ञानमयकोषत्रयमेव लिङ्गशरीरं सूक्ष्मशरीरं वेति वदन्ति। प्राणादिपञ्चवायुमनोबुद्धिदशेन्द्रिययुक्तमपञ्चीकृतभूतसमुत्पन्नं परलोकगमनशीलं तदेव लिङ्गशरीरं मोक्षपर्यन्तावस्थायि भवति। तच्च लिङ्गशरीरं द्विविधम्। परापरभेदात्। तत्र हिरण्यगर्भस्य शरीरं परलिङ्गशरीरमस्मदादीनां शरीरं चापरलिङ्गशरीरम्। हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वं मदादिलिङ्गशरीरं चाहङ्कारतत्त्वमिति वदन्ति। महत्तत्त्वं तु साङ्ख्यमते प्रकृतिकार्यभूताहङ्कारादिकारणनिश्चयात्मकवृत्तिविशिष्टतत्तद्भेदः। लिङ्गशरीरलक्षणं त्वाह विद्यारण्यस्वामी पञ्चदश्याम् "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्"मिति।

पु०—पितः! वेदान्तिमते भवदुक्तदिशा पञ्चीकरणप्रकारो मया नाङ्गीकर्तव्यः। "तासां त्रिवृतमेकैकां करवाणी"ति छान्दोग्योपनिषत्षष्ठप्रपाठकतृतीयखण्डतृतीयानुवाकात्मकश्रुत्या त्रिवृत्करणेनैव स्थूलशरीरोत्पत्त्यङ्गीकारात्। तासामग्निजलपृथिवीनामित्यर्थः। तथाहि प्रथममग्निं त्रिधा विभज्य ततो निजार्धमेकांशं रक्षित्वापरांशद्वयं जलपृथिव्योः, जलं त्रिधा विभज्य ततो निजार्धमेकांशं रक्षित्वापरांशद्वयमग्निपृथिव्योः पृथिवीं च त्रिधा विभज्य ततो निजार्धमेकांशं रक्षित्वापरांशद्वयमग्निजलयोर्विमिश्रणेन प्रत्येकभूतस्य त्रिवृत्करणं भवतीति बोध्यम्।

पि०—सत्य। न चैतावता तत्र श्रुतिगतविरोध शङ्कनीय। "त्रिवृत्करणश्रुते पञ्चीकरणस्याप्युपलक्षणत्वा"दिति ग्रन्थांशेन सदानन्दयतिना तद्गतविरोधपरिहारात्। पूर्वोक्तपद्धति जंगदुत्पत्तौ स्वीकर्त्तव्या। स्थूलशरीरेऽग्निजलपृथिवीनामंशत्रयं स्थूलसूक्ष्मसूक्ष्मतरभेदेन तिष्ठतीति छान्दोग्योपनिषदि परिदृश्यते। यथा—तत्राग्ने स्थूलांशो मज्जा, सूक्ष्मांशोऽस्थि, सूक्ष्मतरांशश्च रेत। अलस्य स्थूलांशो मूत्रम्, सूक्ष्मांशो रक्तम्, सूक्ष्मतरांशश्च प्राणा। पृथिव्याश्च स्थूलांशो मल, सूक्ष्मांशो मांसम्, सूक्ष्मतरांशश्च मन इति। एतद्वेदान्तिमत वयं नाङ्गीकुर्म। प्रत्यक्षीभूतघटपटादिवस्तुभि सहाप्रत्यक्षीभूताकाशकालादीनां परस्परसंयोगत्वा प्रत्यक्षत्ववत्प्रत्यक्षीभूतपृथिव्यादिभि सहाप्रत्यक्षीभूताकाशवायुमिश्रणात्मकस्थूलशरीरस्याप्यप्रत्यक्षत्वापत्तेर्द्वित्राधिकविजातीयवस्तुपरस्परसम्मिश्रणात्मकपदार्थे एकजातीयरूपादिगुणावस्थानासम्भवाच्च। अवयवद्रूपनिष्ठविजातिगुणैरवयविनि गुणोत्पत्ति न सम्भवति। विभिन्नावयवनिष्ठगुणसमुदायादेवावयविगुणोत्पत्त। इतरा स्थूलवस्तुन रूपादिगुणशून्यत्वमापतेत्। अवयविगुणान् प्रत्यवयवगुणानां कारणत्वेन विजातीयावयवद्वयनिष्ठगुणे कस्याप्यन्यगुणस्यानुत्पत्त। तथा सति स्थूलद्रव्याणां त्रिवृत्कृतत्व त्रिभूतात्मकत्व चेति वक्तु न पारयेत। यथा संयोगाभावे अन्यवस्तूत्पत्ति, संयोगनाशे च नन्यवस्तुविनाशो घटते, तथा शरीरसहोपादानकारणभिन्नभूतत्रयसंयोगास्वीकारे यज्जातीयपदार्थसंयोगेन घटकायमविमदपद्धरमुत्पद्यते तादृशपदार्थसंयोगस्वीकार श्रेयानेव। पार्थिवशरीरे क्लेदतापवाय्वाकाशात्मकभूतचतुष्टयसम्बन्धसत्त्वेऽपि केवलपृथिव्या एव तस्योपादानकारणत्वेन समवायिकारणत्वेन वा तदितरसकलभूताना च निमित्तकारणत्वेन तच्छरीरोत्पत्तौ पार्थिवपरमाण्वादिसंयोगस्यैव कारणत्व

मङ्गीकर्त्तव्यम्। तत्संयोगविनाशेनैव तच्छरीरविनाशात्। अत्र जलीयपरमाण्वादिसंयोगस्य कारणत्वं नाङ्गीकर्त्तव्यम्। पार्थिवशरीरं प्रति पृथिव्या एव समवायिकारणत्वेन तत्र गन्धकाठिन्यशीतलस्पर्श-विविधवर्णात्मकगुणानां विद्यमानत्वात्। तत्र क्लेदादीनां निमित्तकारण-गतगुणत्वमवधेयम्।

पु०—पितर ! पार्थिवादिशरीरं प्रति क्षित्यादिपञ्चमहाभूतानां समवायिकारणत्वं मयाङ्गीकर्त्तव्यम्। तैरेव भूतैस्तत्तच्छरीरोत्पत्तेः।

पि०—वत्स ! न चैव वक्तुं शक्नोषि। तथात्वाङ्गीकारे विरुद्ध-गुणसम्पन्नावयवनिचयघटितशरीराणां रूपादिशून्यत्वप्रसङ्गात्। अत: कस्मिन्नपि शरीरे पञ्चमहाभूतानामुपादानकारणत्वं न तिष्ठेत्। तत्त-ज्जातीयशरीरं प्रति तत्तन्मूलभूतस्यैव समवायिकारणत्वमुपादानकारणत्वं वा तदितरापरापरभूतानां च निमित्तकारणत्वमवधेयम्, इत्थं सकलं द्रष्टव्यमनुसन्धेयम्।

पु०—पितर ! तर्ह्यत्र कृपया वक्तव्यं किमास्मकेन्द्रियं प्रति कस्य भूतस्य द्रव्यस्य वोपादानकारणतेति।

पि०—वत्स ! घ्राणेन्द्रियं प्रति पृथिव्या एवोपादानकारणता नान्ये-षाम्। 'निर्गन्धेन वस्तुना गन्धवद्वस्तु नैवारभ्यते' इति नियममाश्रित्य स्वेतरानभिभूतपार्थिवावयवैरेव घ्राणेन्द्रियस्यारब्धत्वाद्गन्धवत्त्वाच्च। गन्धप्रत्यक्षं प्रति घ्राणेन्द्रियस्यैव कारणता। 'बहिरिन्द्रियाणां स्वग्राह्य-ग्राह्यसजातीयवस्तुगुणवत्त्व'मिति नियमात्। नास्येन्द्रियस्य पार्थिवत्व-मपलपितव्यम्। 'यदिन्द्रियस्य परकीयरूपादिप्रत्यक्षाहेतुत्वे सति गन्ध-प्रत्यक्षहेतुत्वं तदिन्द्रियस्यैव कुङ्कुमगन्धाभिव्यञ्जकघृतवत्पार्थिवद्रव्यत्वा-ङ्गीकारात्। रसप्रत्यक्षकारणीभूतरसनेन्द्रियं प्रति जलस्यैवोपादानकार-

णत्वम्। यदिन्द्रियस्य परकीयरूपादिप्रत्यक्षाकारणत्वे सति रसप्रत्यक्षं प्रति कारणत्वं तस्यैव जलीयद्रव्यत्व'मित्यनुमानात्। यथा जले तद्गतस्याभिव्यञ्जकत्वस्यानुभवकारणत्वस्य वानुभवः। चक्षुरिन्द्रियं प्रति तेजस एवोपादानकारणत्वम्। यदिन्द्रियस्य परकीयस्पर्शादीनामनभिव्यञ्जकत्वे सति परकीयरूपमात्राभिव्यञ्जकत्वमस्ति तस्यैव तैजसद्रव्यत्व'मित्यनुमानात्। त्वगिन्द्रियं प्रति वायोरेवोपादानकारणत्वम्। 'यदिन्द्रियस्य रूपाद्यनभिव्यञ्जकत्वे सति स्पर्शमात्रस्यैवाभिव्यञ्जकत्वं तस्यैव वायवीयद्रव्यत्व'मित्यनुमानात्। श्रोत्रेन्द्रियं प्रति कस्याप्युपादानकारणत्वं न सम्भवति। विशिष्टदृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नाकाशात्मकस्य तस्य नित्यद्रव्यत्वात्। पृथिव्यप्तेजोवाय्वाकाशेष्वन्यत्र स्थले यादृशा गन्धरसरूपस्पर्शशब्दास्तिष्ठन्ति तादृशा एव ते घ्राणरसनाचक्षुस्त्वक्कर्णेन्द्रियेष्वप्यवतिष्ठन्ते। घ्राणादीन्द्रियचतुष्टयं प्रति यथाक्रमं पृथिव्यादिचतुष्टयस्योपादानकारणत्वमन्यान्यद्रव्याणां च यथासम्भवनिमित्तकारणत्वमात्रमिति ज्ञेयम्।

पु०—पितरः! जीवस्यायोनिजशरीरं यदङ्गीकृतं प्राक् साम्प्रतं तदुत्पत्तिप्रकारोपवर्णनेनानुग्राह्यः।

पि०—वत्स! पार्थिवशरीरस्यैव योनिजायोनिजोभयविधत्वं तदितरसकलविधशरीराणां त्वयोनिजत्वं, पापपुण्योभयमूलकत्वं चावधेयम्। जलीयाद्ययोनिजशरीराणां पुण्यजन्यत्वेऽपि वायवीयायोनिजशरीराणां पापपुण्योभयमूलकत्वमेव। तेषु वायुलोकगतशरीराणां पुण्यमूलकत्वं, पिशाचादिशरीराणां च पापमूलकत्वमवधेयम्। अयोनिजशरीरोत्पत्तिः कथमिति चेदुच्यते। असंख्यासंख्यपरमाणुपुञ्जो देवमनुष्यपिशाचाद्युपयोगिपुण्यपापफलवशेन क्रमशोऽनुकूलवायुसम्मिलितः सद्योनिजशरीरमुत्पादयति।

तत्तच्छरीरेण सह सति मन संयुक्तात्मसम्बन्धे ते ते जीवास्तत्तच्छरीराणि स्वीकुर्वन्ति। देवशरीरोत्पत्तिस्तु—इतस्ततो विक्षिप्तपरमाणुपुञ्जोऽनुकूलवायुस्पन्देन परस्परं संयुज्यते। धर्मसम्पन्नात्मना सह तत्परमाणुपुञ्जस्य तादृशसंयोगलाभादेव तत्र तादृशस्पन्दनं घटते, नान्यथा। तादृशात्मसंयोगलाभस्पन्दितपरमाणुपुञ्जादेवायोनिजशरीरं समुत्पद्यते। नारकिणामयोनिजशरीरस्य पापसम्पन्नात्मसंयोगलाभस्पन्दितपरमाणुजन्यत्वमेव। मनुष्येष्वपि केषांचिदयोनिजशरीरमस्तीति प्रागुक्तमेव।

पु०—पितः! यदुक्तं प्राक् नवद्भिर्नवैव द्रव्याणीति। तन्मया नाङ्गीकर्त्तव्यम्। मीमांसकैः "तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति" त्यनेन अन्धकारस्य नवद्रव्यातिरिक्तद्रव्यत्वाङ्गीकारात्। तथा हि नास्य क्षितित्वं सम्भवति; गन्धवत्त्वाभावात्। नास्य जलतेजसोरन्तर्गतत्वम्। शीतोष्णस्पर्शवत्त्वाभावात्। नापि वाय्वाकाशकालदिगात्ममनःस्वन्तर्गतत्वमस्य। तस्य नीलरूपवत्त्वात्तेषु च तदभावात्। यतः नवद्भिर्वक्तव्यं जन्यद्रव्यमात्रस्यावयवादिक्रमेणोत्पत्तिविनाशदर्शनादन्धकारस्य च निरवयवत्वेन तथाविधोत्पत्त्यसम्भवात्तस्य नित्यद्रव्यान्तर्गतत्वमस्त्विति। तन्न। घटादिकार्यस्य कपालद्विकारणसापेक्षत्ववद्रात्रौ शतशतालोकेषु निर्वापितेषु किमपि कारणमनपेक्ष्यैवासौ तत्क्षणात्समुत्पद्य तस्य सकलवस्त्वाच्छादकत्वदर्शनात्। किं चास्य गुणादिपदार्थान्तर्गतत्वमपि न दृश्यते। गुणोत्पत्तिमात्रेऽवयवगुणकर्ममनःसंयोगसापेक्षत्वदर्शनात्, कर्मोत्पत्तिमात्रे वेगगुरुत्वप्रयत्नसंयोगादिगुणसापेक्षत्वसत्त्वात् रूपगतिविशिष्टत्वाच्च। अतः पूर्वोक्तदिशोत्पत्तिवैषम्यदर्शनेन द्रव्यादिपृथक्त्वं रूपगत्युभयसन्दर्शनेन ■ न गुणाद्यन्तर्गतत्वमिति निश्चित्य तस्य दशमपदार्थान्तर्गतत्वं स्वीकर्त्तव्यम्।

पि०—वत्स ! न चैवं वक्तुं युज्यते। अन्धकाराभिलक्षितोत्पत्तिविनाशशीलरूपगमनादिधर्माणामस्वाभाविकत्वात्। अन्धकारानुभूयमानोत्पत्तिविनाशशीलरूपगमनादीनामालोकापसारणप्रसारणप्रयुक्तत्वेनालोकाभाव एवान्धकार इति सिद्धान्तः।

पु०—पितरः ! तथापि भवदुक्तदिशा द्रव्यादयः सप्त एव पदार्था इति मया नाङ्गीकर्तव्यम्। वह्निसंयुक्तेन्धनादौ चन्द्रकान्तमणियोगेन दाहानुकूलवह्निगतशक्तिविनाशेन, तन्मणिनिरसनेन वा तदानीमेव सूर्यकान्तमणिसमवधानेन पुनस्तत्र दाहानुकूलशक्त्युत्पत्त्या च शक्तिपदार्थानपलापसम्भवात्।

पि०—वत्स ! न चैवं वक्तुं शक्यते। सूर्यकान्तमण्यभावविशिष्टचन्द्रकान्तमणेस्तत्र प्रतिबन्धकत्वेन सूर्यकान्तमण्यभावविशिष्टचन्द्रकान्तमण्यभावस्य कारणत्वाङ्गीकारेण चन्द्रकान्तमणेः सत्त्वासत्त्वाभ्यां दाहकार्यनिर्वाहेऽनन्तशक्तितत्प्रागभावध्वंसकल्पनायां निष्प्रयोजनत्वात्।

इति श्रीजगन्नाथदेवपुरोहितायुर्वेदोपाध्यायविद्याविनोद-पण्डित-
श्रीदामोदर-महापात्र-शास्त्रि-काव्य-मीमांसा-स्मृतितीर्थ-
विरचिते न्यायादर्शे प्रमेयपरिच्छेदः।

## अथ प्रमाणपरिच्छेदः

—:o:—

पु०—पितरः ! संक्षेपतः प्रत्यक्षस्याङ्गीकृतानुमानस्य स्वरूपमत्र विस्तरेण प्रतिपादनीयं कृपया।

पि०—वत्स ! अनुमानविषये साध्यहेतुपक्षसपक्षविपक्षव्याप्तिज्ञानपक्षधर्मतापरामर्शौ पूर्वोपकारिणौ हेत्वाभासादयश्चापकारिणः। पक्षता-

हेत्वाभासातिरिक्तपदार्था प्राक् प्रदर्शिता एव। अत्र प्रथममनुमान तत पक्षता ततश्च हेत्वाभासान् निरूपयिष्याम। तत्रानुमान द्विविधम्। स्वार्थपरार्थानुमानभेदात्। तत्र स्वार्थानुमितिकारण स्वार्थानुमान परार्थानुमितिकारण च परार्थानुमानम्। व्याप्तिविशिष्टहेतो पक्षवृत्तित्व-निश्चयेनैव निश्चयात्मकानुमानं भवति। तत्र साध्यहेत्वोरेकाधिकरण-वृत्तित्वमेव व्याप्ति। हेतो पक्षे निश्चयेनावस्थिति परामर्श। अनुमितौ पक्षत्वाद्देश्यत्वं साध्यस्य च विधेयत्वमवधेयम्। अवगतवस्तुनि यदि कस्यापि सन्दिग्धवस्त्वन्तरस्य ज्ञानापेक्षा तिष्ठेत्तर्हि तदवगतवस्तुन एवो द्देश्यत्व तिष्ठति, तादृशसन्दिग्धवस्त्वन्तरस्य च विधेयत्वम्। 'साध्य-सन्देहाधिकरणत्व सति साध्यानुमित्युद्देश्यत्व पक्षत्व'मिति पक्षलक्षणम्। अनुमितेरनुद्देश्येऽपि यत्र साध्यसन्देहस्तिष्ठति स पक्षसम। हेतो पक्षवृत्तित्वमेव पक्षधर्मता पक्षवृत्तिर्वा यदा हेतौ साध्यव्याप्ति पक्षधर्मतयोर नयोरेव ज्ञान समुत्पद्यते तदा तज्ज्ञानमेव व्याप्तिप्रकारकपक्षधर्मताज्ञान व्याप्तिविशिष्टपक्षधर्मताज्ञान वेति वदन्ति। तज्ज्ञान परामश इत्यपि वदन्ति। परामर्शस्यानुमितिचरमकारणत्वेन प्राय परामर्शानन्तरमे-वानुमितजायमानतया साधारणकारणताद्दृष्ट्या परामर्श एवानुमिति-कारणमिति केचिन्निगदन्ति। अनुमानस्थले प्रथम धूमादिरूपहेतु-दर्शनानन्तर 'धूमो वह्निव्याप्य' इत्याकारकज्ञाने पूर्वानुभूतधूमादिहेतुभि सह वह्न्यादिसाध्यस्य व्याप्तिस्मरणानन्तरं हेतो 'वह्निव्याप्यधूमवानय पर्वत' इत्याकारकसाध्यव्याप्तिप्रकारेण पक्षधर्मताज्ञाने जाते 'पर्वतो वह्निमा'-नित्याकारकानुमितिरुत्पद्यते। परामर्शात्प्रागपि व्याप्तिस्मरणस्यावश्यक-तयानुमितौ व्याप्तिज्ञान करणं, परामर्शश्च व्यापार। पूर्वोक्तव्याप्तिरपि द्विविधा। अन्वयव्यतिरेकव्याप्तिभेदात्। तत्र 'यद्यत्स्थले हेतुस्तिष्ठति

तत्तत्स्थल एव साध्यस्तिष्ठती'त्याकारकव्याप्तिरेवान्वयव्याप्तिः। 'यत्तत्स्थले साध्यो न तिष्ठति तत्तत्स्थले हेतुरपि न तिष्ठती'त्याकारकव्याप्तिश्च व्यतिरेकव्याप्तिः। स्थूलत इदमेव वक्तव्यं यत् 'साध्यस्य हेतुना सह नियतसाहचर्यं वाऽव्यभिचरितसामानाधिकरण्यं वा साध्याधिकरणे हेतोर्नियमेन विद्यमानत्वं व्याप्तित्व'मिति। सैव व्याप्तिः शास्त्रीयपरिभाषया 'अविनाभावनियम' 'अनौपाधिकसामानाधिकरण्य' वा नियमाख्यया व्यवह्रियते शास्त्रैरिति। साध्यहेत्वोरेकाधिकरणवृत्तित्वमेव तदुभयोः सामानाधिकरण्यं साहचर्यं वेति ज्ञेयम्, पक्ष एव पक्षता तिष्ठति। सैव पक्षता 'सिषाधयिषाविरहविशिष्टसिद्ध्यभाव पक्षते'त्यात्मिका। 'पर्वतादौ मे वह्न्यनुमितिर्जायता'मित्याकारकेच्छात्मिकैव सा। यत्र साध्यनिश्चयसिषाधयिषयोरुभयोर्विद्यमानत्वमस्ति, वा यत्र साध्यनिश्चयसिषाधयिषयोरुभयोरविद्यमानत्वमस्ति, किं वा यत्र सिषाधयिषास्ति साध्यनिश्चयो नास्ति सर्वत्र पक्षता तिष्ठति। किन्तु यत्र सिषाधयिषा नास्त्यथ च साध्यनिश्चयोऽस्ति तत्र पक्षता कथमपि न तिष्ठेत्। सिद्धिर्नाम साध्यनिश्चयः। अत्र सिषाधयिषाविरहो विशेषणं, सिद्धिश्च विशेष्यं, तदभावश्च पक्षतेत्यर्थः। तदुक्तपदघटितविशिष्टाभावस्त्रिविधः। विशेषणाभावप्रयुक्तविशिष्टाभावो, विशेष्याभावप्रयुक्तविशिष्टाभावो, विशेषणविशेष्योभयाभावप्रयुक्तविशिष्टाभावश्चेति। तेषु यत्र स्थले सिद्धिसिषाधयिषयोरुभयोर्विद्यमानतास्ति तत्र विशेषणाभावप्रयुक्तविशिष्टाभावस्तिष्ठति। तत्र सिषाधयिषाविरहात्मकविशेषणस्याभावात्। यत्र सिद्धिसिषाधयिषयोरुभयोर्विद्यमानता नास्ति तत्र विशेष्याभावप्रयुक्तविशिष्टाभावस्तिष्ठति। तत्र सिद्ध्यात्मकविशेष्यस्याभावात्। यत्र च सिषाधयिषास्ति किन्तु सिद्धिर्नास्ति तत्र विशेषणविशेष्योभयाभावप्रयुक्त, सिषाधयिषाविरहात्मकविशेषणस्य सिद्ध्यात्मक-

विशेष्यस्य चासत्त्वात्। अतस्तत्तत्स्थलेषु पूर्वोक्तत्रिविधाभावात्मकपक्षताया विद्यमानत्वेनानुमानं भवतीति निर्णेयम्। यथा पर्वतादौ यत्र कुत्रापि स्थले प्रथमं सिद्धेः साध्यनिश्चयस्य वा विद्यमानत्वेऽप्यनुमित्सोः पुरुषस्य यदि कदाचिदिच्छा जायते, वानुमित्सा नास्ति, वा सिद्ध्यभावो नास्ति, किम्वानुमित्सास्ति सिद्धिर्नास्ति, चेत्तर्हि तदानीं तत्रानुमितिर्भवत्येव। साध्यनिश्चयस्थलेऽनुमित्सासत्त्वेऽनुमितिर्भवति। तत्र साध्यनिश्चयसत्त्वेन सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यासत्त्वात्। पूर्वोक्तकारणकलापस्य स्वार्थपरार्थोभयविधानुमितिकारणत्वमवधेयम्। महानसादौ भूयोभूयो वह्निसाहचर्यसन्दर्शनेन 'धूमो वह्निकार्यतयासौ वह्निं त्यक्त्वा स्थातुं न पारये'दिति पर्यालोचनेन धूमे वह्निं निश्चिन्वन् पुरुषः कदाचिदरण्यमध्ये वह्निमनुसन्धित्सुः स्वयं पर्वते धूमं पश्यन् तस्य पूर्वानुभवबलेन 'धूमो वह्निव्याप्य' इत्याकारकव्याप्तिस्मरणानन्तरमेव 'पर्वतो वह्निमा'नित्याकारेणानुमिनोत्येव। यत्र पूर्वोक्तप्रकारेण धूमादिहेतुसन्दर्शनेन स्वानुमित्यनन्तरं परानुमित्यर्थं पञ्चावयवात्मकं वाक्यं न्यायं वा प्रयुनक्ति तत्रैव तादृशानुमानमेव परार्थानुमानम्। यथाक्रमं प्रतिज्ञादिवाक्यपञ्चकमेव 'न्याय' इति वदन्ति। तादृशन्यायस्यैकैकं वाक्यमवयवः। तदुभयमेलनेन 'न्यायावयवो' भवति। न्यायावयवस्य क्रमभङ्गं न्यूनाधिक्यं वा 'न्यायाभास' इति निगदन्ति। पूर्वोक्तावयवस्तावत् पञ्चविधः। प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात्। तत्र 'पर्वतो वह्निमा'नित्याकारेण पक्षे साध्यनिर्देशः प्रतिज्ञा, 'धूमा'दित्याकारेण पक्षे हेतुनिर्देशो ज्ञापकोपन्यासो वा हेतुर्हेतुवाक्यं वा, 'यो यो वह्निमान् स स धूमवान् यथा महानस'मित्याकारेण व्याप्तिप्रदर्शनमेवोदाहरणम्, 'वह्निव्याप्यधूमवानयं पर्वत' इत्याकारेण साध्यव्याप्यहेतोः पक्षधर्मताप्रदर्शनमेवोपनयः, 'तस्मादयं वह्निमा'नित्याकारेण पक्षे साध्यव्याप्यहेतुसत्त्वेन साध्यवत्त्वख्यापनं च निगमनमिति। निगमनमुपसंहार

इत्यर्थः । एतत्पञ्चावयवात्मकवाक्यानामाकाङ्क्षाबलेन क्रमिकोपन्यस्तेभ्यस्तद्वाक्येभ्य एव श्रोतुरेकविधमहावाक्यज्ञानमुदेति तज्ज्ञानेन च पर्वतादिपक्षे साध्यव्याप्तिविशिष्टहेतुज्ञानात्मकालौकिकपरामर्शे जायमानेऽनायासेन सञ्जाते तु प्रकृतपक्षे प्रकृतसाध्यकानुमितिर्भवति । तामेव परार्थानुमितिरिति वदन्ति । तदनुमितौ तादृशलिङ्गपरामर्शस्यैव कारणत्वम् । तल्लिङ्गपरामर्श एव परार्थानुमानम् । व्याप्तिज्ञानकारणत्ववादिनयेऽपि पूर्वोक्तन्याये समुत्पन्ने महावाक्यार्थबोधे व्याप्तेरपि विषयतया तद्व्याप्यानुमितिं प्रति पूर्वोक्तमानसपरामर्शद्वारा व्याप्तेरेव कारणत्वमवधेयम् ।

पु०—पितरः ! अस्तु तर्हि, साम्प्रतं हेतुगतभेदः कश्चिदस्ति चेत् कृपयात्र प्रदर्शनीयः ।

पि०—वत्स ! ओम्, असौ हेतुर्द्विविधः । सदसद्भेदात् । तदुभयलक्षणस्य प्राक् प्रतिपादिततया साम्प्रतमत्र सद्धेतुभेदमात्रं प्रदर्श्यते । यथा—सद्धेतुस्तावत्कचित्कचित्स्थलेषु 'संयोग्येकसमवायी' 'एकार्थसमवायी' चेति संज्ञाद्वयं लभते । यस्मिन् हेतौ जन्यजनकभावासत्त्वेऽपि संयोगाधीनव्याप्तिविशिष्टत्वेन साध्यानुमापकत्वं परिलक्ष्यते तादृशोहेतुरेव संयोगिहेतुः । यथा—'शरीरं त्वग्विशिष्टं भवितुमर्हति, शरीरत्वा'दित्यत्र शरीरं पक्षः, त्वक् साध्यं, शरीरत्वं च हेतुः । अत्र शरीरेण सह त्वचः कार्यकारणभावासत्त्वेऽपि तेन सह तस्या नियतसंयोगसत्त्वात्सा शरीरत्वव्याप्तिरेव भवति । तद्गतव्यापकतायाः संयोगसम्बन्धावच्छिन्नत्वेन तद्व्याप्तिरपि संयोगाधीनैव । यस्य हेतोर्व्याप्तिविशिष्टाकारेणानुमापकत्वं स हेतुः व्याप्तिः साध्ये वा समवायघटितसम्बन्धी हेतुः समवायिहेतुः । तथा सति साध्यव्यापकत्वे हेतुव्याप्यत्वे यदि समवायसम्बन्धावच्छिन्ने स्यातां तर्ह्यसौ हेतुरेकार्थसमवायिहेतुः । यो हि हेतुर्विपक्षमनुपरितव्याप्ते-

व्यापकताया वा ज्ञानस्य विषयो भूत्वाऽनुमितिविजनको भवति स विरोधि हेतु । फलतोऽव्याहतव्याप्ते पक्षधर्मताविशिष्टहेतुज्ञानस्य वानुमितिहेतुत्व भवति । यथा—'जलगतरूपं तदीयस्पर्शानुमापक भवितुमर्हति, शीतस्पर्शवत्त्वा'दित्यत्र पक्षो जल, तदीयस्पर्शानुमापकत्व साध्य, शीतस्पर्शश्च हेतु । अत्र जलनिष्ठभास्वरशुक्लरूपस्य तद्गतशीतस्पर्शानुमापकत्वेन स्पर्शानुमापकहेतुभूतरूपस्य चैकार्थसमवायितया रूपनिष्ठव्यापकत्वस्पर्शनिष्ठव्याप्यत्वे उभे समवायसम्बन्धावच्छिन्न भवत । प्रोक्तशुक्लरूपस्य यावतीयशीतस्पर्शाधिकरणवृत्तित्वव्यापकतया 'गुणो द्रव्य समवायसम्बन्धनैव तिष्ठती'ति समवायसम्बन्ध एवात्र व्यापकतावच्छेदकसम्बन्ध । तत्र शीतस्पर्शस्य समवायसम्बन्धेन वृत्तितया तन्निष्ठव्याप्यतापि समवायसम्बन्धावच्छिन्ना । वस्तुतस्तु तत्र साध्यहेत्वो समवायसम्बन्धेन विद्यमानतया हेय तत्रैवैकसमवायिहेतुरित्यवगन्तव्यम् । व्याप्तिलक्षणे साध्यहेत्वोरेकाधिकरणवृत्तित्वमेकेनैव सम्बन्धेनोचितम् । विविधसम्बन्धवृत्तित्वस्वीकारेऽनेकत्र दोषसम्भवात् । तथा हि यत्र हेतु साध्याभाववति न विद्यतेऽथ च साध्याधिकरणे तिष्ठति तत्रैव साध्येन सह हेतोर्व्याप्तिरूप सम्बन्धस्तिष्ठति नान्यथा । 'वह्निमान् धूमा'दित्यादिसद्धेतुकानुमानस्थलेऽप्यव्याप्ते । तत्र समवायसम्बन्धेन वह्निमान् धूमावयवस्तदन्ये महानसादौ धूमस्य विद्यमानत्वेन साध्यवद्विशस्थले हेतुसम्बन्धस्याभावात्तत्र व्याप्तिलक्षणस्याव्याप्ति । अत्र साध्यहेत्वोर्वृत्तित्वमेकेनैव सम्बन्धेन स्वीकर्त्तव्यम् । तथा सति पर्वतादिपक्षे वह्निधूमात्मकसाध्यहेत्वो संयोगसम्बन्धेन विद्यमानतया पूर्वोक्तदिशा नाव्याप्तिदोष । स [redacted] सद्धेतु पुनस्त्रिविध । केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तेषु यत्र हेतौ केवलसाध्यस्यैवान्वयव्याप्तिर्गृह्यते स केवलान्वयिहेतु । यथा 'घटोऽभिधेय प्रमेयत्वा'दित्यादौ घट पक्ष, अभिधेयत्व नामविशेषवोध्यत्व वा साध्य,

प्रमेयत्वं यथार्थानुभवविषयत्वं वा च हेतुः। परिदृश्यमानब्रह्माण्डस्थ-सकलपदार्था अभिधेयाः प्रमेयाश्च भवन्ति। 'अभिधेयपदार्था एव प्रमेय-पदार्थाः, यथा घटादय' इत्याकारकान्वयव्याप्तिसत्त्वात्, 'योऽभिधेयो न भवति स प्रमेयोऽपि न भवती'त्याकारकव्यतिरेकव्याप्त्यप्रसिद्धत्वाच्च तादृश-व्याप्त्यभावेऽपि घटे प्रमेयत्वहेतुद्वाराभिधेयत्वसाध्यं प्रति तादृशहेतोः केवलान्वयित्वं बोध्यम्। 'सर्वत्र विद्यमानत्वं केवलान्वयित्व'मिति केवलान्वयिलक्षणात्। यस्मिन् हेतौ केवलं व्यतिरेकव्याप्तिमात्रं गृह्यतेऽसौ केवलव्यतिरेकिहेतुः। यथा 'पृथिवी पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वा'-दित्यत्र पृथिवी पक्षः, पृथिवीतरभेदः साध्यं, गन्धवत्त्वं च हेतुः। अत्र 'यत्र गन्धोऽस्ति स पृथिवीतरपदार्थभिन्न' इत्याकारकान्वयव्याप्तिं प्रदर्श-यितुं न शक्नुयात्। गन्धवत्त्वस्य पृथिवीमात्रनिष्ठत्वात्। पृथिवी पृथिवी-तरपदार्थभिन्नापि पक्षभूतायां तस्यामवश्यं साध्यसंदेहस्य विद्यमानतया पृथिव्या दृष्टान्तरूपेण कस्यापि वस्तुनो व्याप्तिप्रदर्शनस्थानमित्यनिर्दिश्य-मानत्वेन तदयं केवलव्यतिरेकव्याप्तिमात्रस्यैवोदाहर्तुं शक्नुयात्। अस्यायम-भिप्रायः 'पृथिवीभिन्नसकलपदार्था गन्धशून्या जलव'दित्येवंरीत्या साधना-भावस्य साध्याभावमुखेन प्रदर्शनात्तत्र केवलव्यतिरेकिहेतुस्तिष्ठतीति ज्ञेयम्। केवलव्यतिरेकिण्यपि हेतुमुखेन साध्यस्य प्रदर्शनं चेदसौ तदन्वयव्याप्तिग्रहण-पक्षे उपयोगी भवति, साध्याभावमुखेन हेत्वभावप्रदर्शनं चेदसौ व्यतिरेक-व्याप्तेरेव ग्राहको भवति। अन्वयव्याप्तिं सपक्षे व्यतिरेकव्याप्तिं च विपक्षे प्रदर्शयन्ति। यस्मिन् हेतावन्वयव्यतिरेकव्याप्तिद्वयस्यैकत्रैव ग्रहणं भवत्यसा-वन्वयव्यतिरेकिहेतुः। यथा 'वह्निमान् धूमा'दित्यत्र 'यत्र यत्र धूमस्तत्र तत्र वह्निर्यथा महानस'मित्याकारकान्वयव्याप्तिवत् 'यत्र वह्निर्नास्ति तत्र धूमो-ऽपि नास्ति यथा जलह्रदादि'रित्याकारकव्यतिरेकव्याप्तेरपि सत्त्वादयमन्वय-व्यतिरेकिहेतुरयम्। पूर्वोक्तव्याप्तिगतभेदमाश्रित्य हेतोर्यथा त्रैविध्यं संसाधितं

तथानुमानस्यापि त्रैविध्य साधयेत्। यथा तदनुमानं त्रिविधम्। केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेक्यनुमानभेदात्। अनुमितिदशाया हेतुष्वनुमित्यनुकूलतत्कालिकाना पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वा सत्प्रतिपक्षितत्वाना पञ्चानामेवास्तित्वमावश्यकम्। तेषु पक्षे हेतोर्विद्यमानता पक्षसत्त्वम्, सपक्षे हेतोर्विद्यमानता सपक्षसत्त्वम्, विपक्षे साध्याभाववति वा हेतोरविद्यमानता विपक्षासत्त्वम्, पक्षे साध्याभावस्याविद्यमानत्वं बाधितत्वम्, साध्याभावव्याप्यधर्मान्तरानुपस्थितित्वं चासत्प्रतिपक्षितत्वमिति। तत्र पक्षसत्त्वमेव पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपधर्मत्रयस्यान्तरङ्गस्वरूपम्। तदेव पक्षधर्मतापदेन पक्षसत्त्वविपक्षासत्त्वव्याप्तिपदेन च व्यवह्रियते। सपक्षसत्त्वविपक्षासत्त्वव्याप्तिरव्यभिचरितसाहचर्यमित्यर्थ। अतो हेतोरावश्यकीभूत व्याप्तिपक्षतापदार्थद्वय पक्षसत्त्वादित्रयस्य नामान्तरमात्रमिति ज्ञेयम्। अबाधितत्वासत्प्रतिपक्षितत्वपदार्थद्वय हेतोर्बहिरङ्गस्वरूपम्। तत्पदार्थद्वयस्य साध्यादेव हेतुसम्पादकत्वात्। तेन पक्षसत्त्वादिधर्मपञ्चकविशिष्टहेतुरेव सद्धेत्वाख्यया गमकहेत्वाख्यया वाभिहित। स्वार्थानुमानस्थल एवाध्यात्मिकप्रक्रियानुसारेणैतत्पञ्चकज्ञानं हेतोरुपरि स्वत एव आगच्छति, परार्थानुमानस्थले तु पञ्चावयवात्मकन्याय वाक्यबलेनैव तत्सुलभमिति ज्ञेयम्।

पु० —पितर ! अस्तु तर्हि, साम्प्रतमसद्धेतो स्वरूपमनुमितिप्रतिबन्धकत्वं च निर्णेयमत्र कृपया।

पि०—वत्स ! साध्याधिकरणावृत्ति, साध्याधिकदेशवृत्ति, साध्याभावाधिकरणवृत्तिर्वा हेतुरसद्धेतु। स च हेत्वाभासाख्ययाप्यभिहित। 'हेतुवदवभासमानत्वेऽपि वस्तुतोऽहेतुत्व हेत्वाभासत्वमिति हेत्वाभासलक्षणम्। स च हेतुगतदोष। असद्धेतुस्तु पूर्वोक्तपक्षसत्त्वादिधर्मपञ्चकाभावादयमा

व्यभिचारविरोधासिद्धबाधसत्प्रतिपक्षभेदेन पञ्चविध । हेत्वाभासोऽपि पञ्चविध । सव्यभिचारविरुद्धासिद्धबाधितसत्प्रतिपक्षभेदात् । तत्र सव्यभिचारोऽनैकान्तिकसंज्ञ बाधितश्च कालात्ययापदिष्टोऽतीतकालश्चेति संज्ञा लभते । तत्र व्यभिचार साध्याभाववद्वृत्तित्व विपक्षसत्त्वमिति यावत् । स च पूर्वोक्तविपक्षासत्त्वाभावरूप । विरोध साध्यासामानाधिकरण्य साध्याभाववद्वृत्तित्वं सपक्षावृत्तित्वमिति यावत् । [redacted] च सपक्षसत्त्वाभावरूप । पक्षे हेतोरवृत्तित्वमसिद्धि । सा च पक्षासत्त्वाभावरूप । पक्षे साध्याभावो बाध । स चाबाधितत्वाभावरूप । पक्षे साध्यसाध्याभावसाधकहेत्वन्तरयोर्मेलन सत्प्रतिपक्ष । स च फलतोऽसत्प्रतिपक्षितत्वाभावरूप । अथानुमितौ तत्कारणीभूतपरामर्शे च पूर्वोक्तव्यभिचारादिदोषप्रतिबन्धकता प्रदर्श्यते—यथा—तत्र परामर्शे व्याप्तिभाने व्यभिचारविरोधात्मकदोषद्वय ज्ञानस्य प्रतिबन्धकत्वम् । तद्व्याप्तिमध्ये नियमसामानाधिकरण्योभयात्मकभागद्वयस्य विद्यमानत्वात् । नियमोऽव्यभिचार साध्याभावाधिकरणे हेतोरवृत्तित्वमिति यावत् । पूर्वोक्तव्यभिचारस्य (साध्यशून्यदेशवृत्तित्वस्य) नियमस्य (अव्यभिचारस्य) अस्तित्वेऽव्यभिचारज्ञानं प्रति व्यभिचारज्ञानस्य विरोधित्वेन प्रतिबन्धकता स्वाभाविक्येव । हेतौ साध्यसामानाधिकरण्य वा साध्यसाहचर्यमेवात्र साध्यहेत्वोर्वृत्तित्वमिति यावत् । तच्च सपक्षवृत्तित्वस्वरूपम् । अत एवात्र साध्यसामानाधिकरण्यांशस्य वा सपक्षावृत्तित्वस्याभावविषया विरोधित्वेन विरोधज्ञानस्य साहचर्यज्ञानं प्रति सामानाधिकरण्यांशज्ञानं प्रति वा प्रतिबन्धकतया व्यभिचार विरोधात्मक-दोषद्वय ज्ञानं परामर्शनिष्ठव्याप्तिभानप्रतिबन्धकमित्यनायासकल्पमिति आलोच्यम् । यत्तु हेतुपरामर्शे यो साध्यव्याप्त्यंशभिन्नान्यांशमानं तत्तु पक्षधर्मतास्वरूपम् । पक्षधर्मता पक्षवृत्तित्वं पक्षसत्त्वं पर्यायः । असिद्धिः पक्षे हेतोरवृत्तित्वं पक्षासत्त्वमिति

यावत्। अस्या अभावविषया पक्षसत्त्वविरोधित्वेन परामर्शनिष्ठपक्षधर्मताभानप्रतिबन्धकत्वमिति व्यभिचारविरोधज्ञानव्याप्तिभानेऽसिद्धिज्ञानपक्षधर्मताभाने च प्रतिबन्धकत्वमप्यस्तीति। स्थूलतोऽत्रेदमेवावधेयं यत् प्रोक्तदोषत्रयज्ञानस्य सामान्यतः परामर्शप्रतिबन्धकत्वमबाधितत्वं पक्षे परामर्शप्रतिबन्धकत्वमिति। पक्षे साध्याभाववत्त्वमबाधितत्वं, पक्षे साध्यावृत्तित्वं च बाधः। अतएव पक्षे साध्यस्य साध्यवत्तापर्यवसिताबाधितत्वरूपधर्मं प्रत्यभावविषया विरोधित्वेन यज्ज्ञानस्य पक्षे साध्यवत्तापर्यवसिताबाधितत्वज्ञाने यदा प्रतिबन्धकत्वं दृश्येत तदा पक्षे साध्यानुमितौ प्रतिबन्धकतावश्यमेव घटिष्यतेऽत्र न कश्चित्सन्देहः। पक्षे साध्याभावव्याप्यधर्मान्तरस्यानुपस्थितत्वमसत्प्रतिपक्षितत्वम्। यथावदसत्प्रतिपक्षितत्वविपरीतस्तावत् सत्प्रतिपक्षदोषः। सत्प्रतिपक्ष- साध्यभावव्याप्यधर्मान्तरोपस्थितिभावविषया विरोधीति यावत्। तथा सति तस्योपस्थितिकाले हेतावसत्प्रतिपक्षितत्वज्ञानस्य प्रतिबन्धकत्वेन सत्प्रतिबन्धकत्वेन सदैवानुमितावपि प्रतिबन्धकत्वमुत्पादयिष्यत इति सम्भाव्यते। अस्यायमभिप्रायः पक्षे साध्याभावव्याप्यहेत्वन्तरज्ञाने जायमाने पक्षे पुनः साध्यं नानुमितुयात्। येषु केष्वपि वस्तुषु वस्तुद्वयस्यैव निर्णयात्। यथा भावस्याभावोऽभावस्य च भावो विरोधित्वेन निर्णीतस्तथा भावस्याभावव्यापिवस्तु अभावस्य च भावव्यापिवस्त्वपि विरोधित्वेन निर्णेयम्। यदा पर्वते वह्निव्याप्यधूमज्ञानं भवति तदा तत्र वह्न्यभावज्ञानं न भवति! स्वस्वव्याप्ययोरुभयोरेव स्वस्वाभावविरोधित्वात्। तथा सति जागरूके वह्न्यभावव्याप्यजलादिज्ञाने पर्वतादौ वह्निज्ञानमात्रस्योत्पत्तिरप्यसम्भाविनो। स्वाभावस्य स्वाभावव्याप्यस्य चोभयोरेव स्वविरोधित्वात्। तथा सति पक्षे साध्याभावव्याप्यवत्तानिश्चयात्मकसत्प्रतिपक्षनिश्चयकाले साध्यानुमितेः प्रतिबन्धकत्वं स्वाभाविकमेव। तदानीमनुमितिर्नोत्पद्यत इत्यर्थः। सुतरां

सत्प्रतिपक्षनिश्चय एव पक्षे साध्यानुमितिप्रतिबन्धक सन् हेतौ पूर्वोक्त-सत्प्रतिपक्षितत्वात्मकज्ञानमपि बाधते। अतो निर्णीयते हेत्वाभासमात्र-ज्ञानस्यैव यथायथमनुमितितत्कारणीभूतपरामर्शयोरुभयोरेव प्रतिबन्धक त्वमिति। एव हेतौ पूर्वोक्तपक्षविघज्ञाने बाधा दापयन् तज्ज्ञान दुर्बलयति, अनुमानक्षमबलहीनं करोतीत्यर्थ। हेतुगतदोषाणां स्वत स्वार्थानुमिति-बाधाजनकत्वेऽपि परार्थानुमितौ तेषु प्रतिवादिकर्तृकोद्भावितेषु सत्सु वादि-निग्रहकर्तृत्वसन्दर्शनेनोभयविधानुमितौ हेत्वाभासवर्जनमावश्यकमिति निर्णयम्। निग्रह पराजय इत्यर्थ। पूर्वोक्तव्यभिचारदोषस्तावत्त्रिविध। साधारण्यासाधारण्यानुपसंहारित्वभेदात्। एवत्रिविधदोषमादाय पूर्वोक्त सव्यभिचारहेतुरनैकान्तिकहेतुर्वापि त्रिविध। साधारणासाधारणानुप-संहारिभेदात्। तेषु 'सपक्षविपक्षोभयनिष्ठहेतु साधरणानैकान्तिकहेतु'। यथा 'पर्वतो धूमवान् वह्ने'रित्यत्र पर्वत पक्षो, धूम साध्यो, वह्निश्च हेतु। अत्र वह्न्यात्मकहेतोर्महानसादिसपक्षे विपक्षीभूतायोगोलके च विद्यमान-त्वेन साधारणानैकान्तिकत्वम्। सपक्षविपक्षयोरुभयत्राविद्यमान केवल साध्यसन्देहस्थल एव विद्यमानो हेतुरसाधारणानैकान्तिकहेतु। यथा 'शब्दोऽनित्य शब्दत्वादि'त्यत्र शब्दत्वरूपहेतु। अत्र शब्द पक्षो-ऽनित्यत्व साध्य, शब्दत्व च हेतु। अत्र शब्दत्वहेतोरनित्यत्वविशिष्ट-घटपटादिसपक्षे नित्यत्वविशिष्टगगनादिविपक्षे चाविद्यमानत्वेन केवल साध्यसन्देहाधिकरणपक्षभूतशब्द एव विद्यमानत्वेन चासाधारणानैकान्तिक हेतुत्वम्। यस्य हेतोरन्वयव्यतिरेकोभयविधदृष्टान्तदौर्लभ्यं घटतेऽसावनुप संहारिरूपानैकान्तिकहेतु। यथा 'सर्वोऽनित्य प्रमेयत्वा'दित्यत्र सर्वत्वप्रकारेण सर्वं पक्ष, अनित्यत्व साध्य, प्रमेयत्व च हेतु। अत्र सर्वस्य पक्षत्वेन साध्यसन्देहस्थलत्वेन वा साध्यस्य साध्यसन्देहस्य वा निश्चयार्थं सपक्षविपक्षयोरप्रसिद्धत्वेन सपक्षेऽन्वयव्याप्तिप्रदर्शनाय विपक्षे

च व्यतिरेकव्याप्तिप्रदर्शनाय दुर्लभतया प्रमेयत्वादिकेवलान्वयिहेतूनामनुपसंहारिरूपानैकान्तिकहेतुत्वमवधेयम्। यस्य हेतोः साध्यासामानाधिकरण्यं सपक्षावृत्तित्वं वास्त्यसौ विरुद्धहेत्वाभासहेतुः। साध्यासामानाधिकरण्यं नाम साध्येन सह हेतोरनवस्थानम्। यथा 'वह्निमान् जला'दित्यत्र वह्निः साध्यो जलत्वं [redacted] हेतुः। अत्र वह्न्यात्मकसाध्येन सह जलत्वात्मकहेतोरविद्यमानत्वेन साध्याधिकरणावृत्तितया तस्य विरुद्धहेतुत्वमेव। पूर्वोक्तासिद्धिरपि त्रिविधा। आश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्धिभेदात्। अस्याश्चैविध्येनासिद्धहेत्वाभासोऽपि त्रिविध'। आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदात्। तत्राश्रयासिद्धः पक्षासिद्धाख्ययाभिहितः। यस्य हेतोः पक्षे पक्षतावच्छेदकधर्मस्याभावस्तिष्ठति स एवाश्रयासिद्धो पक्षासिद्धो वा हेतुः। यथा 'काञ्चनमयपर्वतो वह्निमान् धूमा'दित्यत्र काञ्चनमयपर्वतः पक्षो, वह्निः साध्यः, धूमो हेतुः, काञ्चनमयपर्वतत्वं च पक्षतावच्छेदकम्। पक्षे विशेषणीभूतधर्मः पक्षतावच्छेदकधर्मः, साध्ये विशेषणीभूतधर्मः साध्यतावच्छेदकधर्मो, हेतौ विशेषणीभूतोधर्मश्च हेतुतावच्छेदकधर्मः। अत्र काञ्चनमयपर्वतात्मकपक्षस्याप्रसिद्धया हेतोराश्रयासिद्धत्वं वा पक्षासिद्धत्वमेव। यस्य हेतोः पक्षावृत्तित्वमस्ति [redacted] स्वरूपासिद्धहेतुः। यथा 'पर्वतो वह्निमान् महानसत्वा'दित्यत्र पर्वतः पक्षो, वह्निः साध्यो, महानसत्वं च हेतुः। अत्र तादृशहेतोर्महानससमात्रवृत्तित्वेन पर्वतात्मकपक्षे तस्याविद्यमानतया स्वरूपासिद्धत्वम्। यस्मिन् हेतौ हेतुतावच्छेदकधर्मो [redacted] तिष्ठत्यसौ साधनासिद्धिहेतुः। यथा 'पर्वतो वह्निमान् काञ्चनमयधूमत्वात्, जलीयधूमात्वा'द्वित्यत्र काञ्चनमयधूमो जलीयधूमो वा हेतुः, काञ्चनमयधूमत्वं जलीयधूमत्वं वा हेतुतावच्छेदकम्। अत्र धूमस्य पार्थिवपदार्थत्वेन तत्र काञ्चनमयत्वादिधर्माणां हेतुतावच्छेदकत्वासम्भवेनाप्रामाणिकत्वेन च तादृशहेतोः साधनासिद्धत्वमेव। यद्धेतु-क

योगित्वं साधनाव्यापकत्वम्। यद्वस्तुद्वयमध्ये एकस्याधिकरणेऽपरस्या भावो न तिष्ठति तदुभयवस्तुमध्ये क्रमशो व्याप्यव्यापकभावस्तिष्ठत्येव। 'तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं व्यापकत्वं' 'तद्वन्निष्ठात्यन्ताभावप्रतियोगित्वं व्याप्यत्वं' चेति तदुभयलक्षणात्। अत्र व्यापकत्वलक्षणघटित-तत्पदेन व्याप्यपदार्थो धर्त्तव्यः। तेन वह्निधूमयोर्मध्ये तत्पदेन धूमस्तद्वान् पर्वतादिस्तन्निष्ठो 'घटो नास्ति'त्याद्याकारको योऽत्यन्ताभावस्तत्प्रतियोगी घटादिरेवाप्रतियोगी तु वह्निस्तस्य वह्नौ तिष्ठतीति व्यापकलक्षणसमन्वयः। तादृशाभावस्य प्रतियोगी वह्निर्भवितुं नार्हति। हेतुभूतव्याप्यपदार्थ-धूमाधिकरणे पर्वतादौ वह्नेर्विद्यमानत्वेन तत्र तदभावासत्त्वात्) तत्र व्याप्य-लक्षणघटिततत्पदेन व्यापकपदार्थो धर्त्तव्यः। तत्रैव वह्निधूमयोर्मध्ये तत्पदेन वह्निस्तद्वान् पर्वतादिस्तदधिकरणभूतायोगोलके 'धूमो नास्ती'त्याकारका-त्यन्ताभावसत्त्वेन तदभावप्रतियोगिनो धूमस्य वह्न्यपेक्षया व्याप्यत्वमिति व्याप्यलक्षणसमन्वयः। तथा सति धूमसाध्यकवह्निहेतुकानुमितौ आर्द्रेन्धन संयोग एवोपाधिः। धूमविद्यमानतास्थले आर्द्रेन्धनसंयोगसम्भवात्, वह्न्यधिकरणायोगोलके तत्संयोगाभावाच्च। धूमं प्रत्यार्द्रेन्धनसंयोगस्यास्य तमकारणत्वमस्ति। धूमाधिकरणपर्वतादिवस्तुषु आर्द्रेन्धनसंयोगेन धूमापेक्षया तस्य व्यापकत्वं, हेतुभूतवह्न्यधिकरणायोगोलके च तदभावसत्त्वेन वह्न्यपेक्षया तस्य व्याप्यत्वमवधेयम्। यत्र यद्वस्तुद्वयमध्येऽन्यतरस्य क्वचिद-परस्याधिकरणेऽविद्यमानता सम्भाव्यते, तत्र तद्वस्तुद्वयस्य वह्निवृक्षयोरिव परस्परव्याप्यव्यापकभावो न तिष्ठेत्। वह्न्यधिकरणगोष्ठादौ वृक्षावस्थाना-सम्भवाद्वह्नेः सर्वत्र वृक्षवृत्तित्वसम्भवेऽपि वह्निवृत्तित्वसम्भवाच्च। यथा वह्नि-वृक्षस्य व्याप्यो व्यापको वा न भवति, तथा वृक्षोऽपि वह्नेर्व्याप्यो व्यापको वा न भवेत्। प्रकृतस्यार्द्रेन्धनसंयोगस्य वह्निव्यापकत्वं नास्त्येव। तस्य धूमं प्रति कारणतासत्त्वेऽपि वह्निं प्रति कारणत्वासत्त्वात्। वह्न्यधि-

करणमात्रे नियताकारेणार्द्रेन्धनसंयोगाभावेन वह्निहेत्वपेक्षया सादृशोपाधिरव्यापक एव। तस्य धूमात्मकसाध्यापेक्षया व्यापकत्वासिद्धहेत्वाभासत्वमप्यवधेयम्। यद्धेतो साध्याभाव प्रमाणान्तरनिश्चितोऽभूत्स एव बाधित हेतु। यथा 'वह्निरनुष्णो, द्रव्यत्वा'दित्यत्र वह्नि पक्षोऽनुष्णत्व साध्यो, द्रव्यत्व च हेतु। अत्र 'अनुष्णत्व नास्ती'त्याकारकसाध्याभावस्योष्णत्वस्वरूपत्वेन तस्य स्पर्शप्रत्यक्षसम्भवादसौ बाधितहेतु। किञ्च यत्र पक्षे साध्यो न तिष्ठति तादृशसाध्यानुमापकहेतुरेव बाधितहेतु। अस्योदाहरण तु पूर्ववत्। यस्यानुमानायानुकूलपरामर्शस्तद्विरोधानुमापकपरामर्शश्चोभावेवैकत्र मिलित्वा तदानीं तिष्ठेतां चेत्तर्हि तयोरन्यतरस्य कस्यचित्परामर्शस्य फलाभावेन युगपदेव विरोधिद्वयस्योत्पत्ती सत्या तदानीमसावेव हेतु सत्प्रतिपक्षहेतु। किञ्च 'यत्र युगपदेव विरुद्धहेतुद्वयपरामर्शो घटते स सत्प्रतिपक्षहेतु'। यथा 'ह्रदो वह्निमान् धूमा'दित्यत्र ह्रद पक्षो, वह्नि साध्यो, धूमश्च हेतु। अत्र 'वह्निव्याप्यधूमवानयं ह्रद' इत्याकारकपरामर्शकाले "वह्न्यभावव्याप्यजलवानयं ह्रद" इत्याकारकपरामर्शश्चेत्तर्हि उक्तहेतुद्वयस्य सत्प्रतिपक्षितत्वम्। प्रतिपक्षो विरोधीत्यर्थ। यत्समये यदनुमानार्थं परामर्श क्रियते तत्समये परामर्शविरोधित्वसूचकपरामर्शस्तिष्ठति चेत्तर्हि तदानीं कस्यचिदपि परामर्शस्य फलाभावेन समकालोत्पन्नविरोधिपरामर्शद्वयस्थले यो हेतुस्तिष्ठति स एव सत्प्रतिपक्षित सत्प्रतिपक्षश्चेति संज्ञाञ्च लभते। बाधितहेतो द्वितीयलक्षणोदाहरण यथा—'उत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वा'दित्यत्रोत्पत्तिकालीनघट पक्षो, गन्ध साध्य, पृथिवीत्व च हेतु। अत्र 'कारणमन्तरेण कार्यानुत्पत्ति'रिति नियममुपजीव्य घटोत्पत्ते प्राक् घटाभावसत्त्वेनोत्पत्तिकालीनघटे गन्धसत्त्वासम्भवात्पक्षे साध्याभावस्याप्यनुमानात्तादृशहेतुर्बाधितदोषदुष्ट इति ज्ञेयम्। वैशेषिकनयेऽसौ हेत्वाभासस्त्रिविध। अप्रसिद्धासत्सन्दिग्धभेदात्। तेषु

साध्ये साध्यतावच्छेदकधर्मो न तिष्ठत्यसौ साध्यासिद्धो हेतुः। यथा 'पर्वतो मणिमयवह्निमान् धूमा'दित्यत्र मणिमयवह्निः साध्यं, साध्यतावच्छेदकञ्च मणिमयवह्नित्वम्। अत्र तैजसद्रव्यात्मकवह्नौ मणिमयत्वाद्यभावेन तद्धेतौ साध्यासिद्धत्वमेव। इत्थं पार्थिववह्निसाध्यके जलीयवह्निसाध्यके वाऽनुमानेऽपि बोध्यम्। तत्र पार्थिववह्नित्वजलीयवह्नित्वयोः साध्यतावच्छेदकधर्मत्वात्। साध्यासिद्धसाधनासिद्धयोर्व्याप्यत्वासिद्धान्तर्गतत्वमेव। हेतौ व्याप्त्यभावस्यैव व्याप्यत्वासिद्धत्वात्। 'साधनेन सह साध्यस्य नियतसाहचर्यमव्यभिचरितसाहचर्यमेव वा व्याप्ति'रिति प्रागुक्तकथनादवश्यं व्याप्तिमध्ये साध्यसाधनयोरुभयोर्निविष्टतया यत्स्वरूपेण तयोस्तत्रोपन्यासः तेनैव स्वरूपेणाधारसाध्यतावच्छेदकसाधनतावच्छेदकरूपेण व्याप्तिमध्ये तदुभयोर्निवेशः कर्तव्यः। किन्तु तद्धर्मस्य हेतौ साध्ये वा वस्तुतोऽविद्यमानतया यत्र हि प्रकृतहेतौ प्रकृतसाध्ये वा व्याप्तेस्तदुपन्यासानुरूपमविद्यमानतया तादृशव्याप्त्यभावः व्याप्यत्वासिद्धहेतुरिति निर्णयम्। साध्यासिद्धसाधनासिद्धयोरनतिरिक्तस्थानेऽपि व्याप्यत्वासिद्धिः सम्भवति। यथा—यत्र साध्यस्य व्याप्तिग्रहणकाले हेतुतावच्छेदकरूपेण कश्चित्

त्वात्। 'धूमो वह्निव्याप्य' इत्याकारेण हेतुतावच्छेदकधूमत्वविशिष्टधूमेन सहैव वह्नेर्व्याप्तिज्ञानं भवति न तु नीलधूमत्वविशिष्टधूमेन साकम्। गौरवभिया तत्र प्रकृतहेतुतावच्छेदकत्वानङ्गीकारात्। अतस्तस्य व्याप्यत्वा सिद्धत्वमेव। अथ द्वितीयलक्षणोदाहरण यथा—'धूमवान् वह्नेरित्यत्र धूमः साध्यो, हेतुः वह्निर्हेतुतावच्छेदकञ्च वह्नित्वम्। अत्र हेतुतावच्छेदक वह्नित्वविशिष्टवह्नेर्धूमात्मकसाध्याभाववत्ययोगोलकेऽपि विद्यमानत्वेन धूमेन सह वह्नेः, 'वह्निर्धूमव्याप्य' इत्याकारकव्याप्त्यभावात् प्रकृत हेतुतावच्छेदकवह्नित्वमादाय धूमेन सह वह्निहेतोर्व्याप्तिसम्पन्नासम्भवेन तस्य व्याप्यत्वासिद्धत्वम्। धूमेन सह वह्नेर्नियतसाहचर्यं नैव सम्भवति। वह्नेर्धूमाभाववत्ययोगोलकेऽपि विद्यमानत्वात्। शुद्धवह्नेर्धूमापेक्षया व्यापकत्वेऽप्यार्द्रेन्धनसंयोगमादाय धूमापेक्षया व्याप्यत्वमपि सम्भवेत्। शुद्ध-वह्नित्वविशिष्टवह्निहेतुकधूमसाध्यकानुमितौ हेतौ साधारणानैकान्तिक रूपव्यभिचारित्वं सम्भवेत्, किन्त्वार्द्रेन्धनसंयुक्तवह्नित्वप्रकारकधूमसाध्य कानुमितौ तादृशवह्निना सह धूमो नियतसाहचर्यं लभते। तथा सत्यपरीत्या तदुभयोर्व्याप्तिलाभेऽपि तत्र प्रकृतहेतुतावच्छेदकरूपेण हेतुसाध्ययोर्व्याप्तिर सुलभा। सर्वत्र हेतोर्व्याप्यत्वासिद्धत्वमिति वक्तुं पारयेत्। अत्रेदं विवेचनीयं यत्र हेतौ साध्यस्य व्याप्तिः प्रकृतधर्मपुरस्कारेण नैव तिष्ठति, किन्त्वन्यवस्तुसम्पर्केणैव कथञ्चित्सम्भवति सा तत्रौपचारिकत्वेनेति ज्ञेयम्। यथा स्वाभाविकशुक्लस्फटिकादिमणेर्जवाकुसुमादिसन्निधानेन लौहित्यादि धर्मावभासो घटते, न वस्तुतस्तथार्द्रेन्धनसंयुक्तवह्नित्वविशिष्टवह्निहेतुकानु-मितिस्थलेऽप्युपाधिवशेनैव तथा घटते। स्फटिकवह्निस्थले जवाकुसुम एवोपाधिरत्रत्वार्द्रेन्धनसंयोग एवोपाधिः। 'साध्यव्यापकत्वे सति साधना व्यापकत्वमुपाधित्व'मित्युपाधिलक्षणम्। तत्र साध्यसमानाधिकरणात्यन्ता-भावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रति-

यस्मिन् हेतौ पक्षवृत्तित्वं नास्ति, वा यस्य हेतोराश्रयीभूतपक्षे पक्षतावच्छेदकधर्मो न तिष्ठति, वा येन हेतुना सह साध्यस्य व्याप्तिर्न तिष्ठति तादृशलक्षणत्रयघटितहेतुरेवाप्रसिद्धहेतुः। साध्याधिकरणावृत्तिहेतुरसद्धेतुर्विरुद्धहेतुर्वा। साध्यसन्देहजनकहेतुः सन्दिग्धहेतुर्व्यभिचारिहेतुर्वा। किञ्च यो [illegible] हेतुर्विरुद्धवस्तुघटितपक्षमात्रे व्याप्तिज्ञानस्य च विषयः सन्ननुमितिं जनयेदसौ विरोधिहेतुः। अन्यच्च 'यद्धेतुसत्त्वेऽपि कार्योत्पत्तिः कथमपि न सम्भवेदसावपि विरोधिहेतुः। यथा वृष्टिं प्रति प्रबलवायुवहनस्यैकविधविरोधित्वं सन्दृश्यते। समकाले समस्थाने च वृष्टेः प्रबलवायुसञ्चालनस्य चाभावात्। अपरं च यस्य हेतोरविद्यमानत्वेऽपि कार्यानुमापकत्वमस्ति सोऽपि विरोधिहेतुः। यथा प्रच्छन्नवनभूमावास्फालनकारिसर्पो नकुलश्च तिष्ठतः। सर्पस्य भयसम्भ्रमक्रोधास्फालनोभयकर्मदर्शनात्। अयमप्येकविधविरोधिहेतुः। अथ पूर्वोक्तत्रिविधहेतूनामुदाहरणान्यत्र यथाक्रमं प्रदर्श्यन्ते। यथा—कदाचिदेकस्य चित्स्थानस्याभिमुखेन गतवतोः पुरुषयोः कस्मिंश्चित्स्थाने दूरादेकं गर्दभं दृष्ट्वा तयोरेकः प्रथमं गर्दभस्य कर्णद्वयं शृङ्गाकारेणापरश्च कर्णाकारेण निश्चित्य पश्चात्कथंचित्तत्पुच्छावलोकनेन परस्परविवदमानौ तौ 'दूरस्थोऽयं पशुः किञ्जातीयो भवे'दित्याकारेण तं पशुमनुमातुमप्रवर्त्तेताम्। इत्यवसरे तत्र कश्चित्तृतीयपुरुषः समुपस्थाय पश्यति। तदानीं तयोः प्रथमं कर्णौ शृङ्गाकारेण निश्चिन्वन् पुरुषोऽन्वमिनोत् 'अयं पशुरश्वो भवितुमर्हति, शृङ्गवत्त्वा'दिति। तच्छ्रुत्वा कर्णौ कर्णाकारेण निश्चिन्वन् पुरुषो हसित्वाकथयत् 'भोः कर्णौ शृङ्गाकारेण निश्चित्य गर्दभं 'अयमश्व' इत्यनुमानं तवानुचितम्। अश्वस्य शृङ्गवत्त्वाभावात्। तच्छ्रवणेन पुनर्विवादोद्यतं तमसौ तृतीयपुरुषोऽवदत्कथं विवदसे? भोः, गर्दभत्वेन निश्चिन्वतस्तव्यस्य वचसो यथार्थत्वात्पूर्वस्यायथार्थत्वात्। इत्यादिस्थलेषु तदुपरि त्रयप्रदर्शितहेतूनामप्रसिद्धत्वं

विरुद्धत्व वा बोद्धव्यम्। शृङ्गेण सहाश्वस्य 'यत्र यत्र शृङ्गं तिष्ठति, तत्र तत्राश्वत्वमपि तिष्ठती'त्याकारकव्याप्त्यात्मकनियमस्याभावात्। तत्र व्याप्तिर्दूरे तिष्ठतु, शृङ्गाधिकरणे कुत्राप्यश्वत्व स्यातु नैव पारयत। ईदृश हेतोरप्रसिद्धत्वमेव। तद्दूरस्यपशौ शृङ्गाभावेन पक्षवृत्तित्वासम्भवात्। अत्राश्वत्वरूपसाध्यस्याधिकरणेऽश्वे शृङ्गात्मकहेतोरविद्यमानत्वनासौ हेतु विरुद्धहेतुरपि भवेत्। असिद्धहेतौ प्रकारान्तरोदाहरणं यथा सुवर्णमय प्रस्तरस्य पक्षत्वाङ्गीकारे तत्राश्रयासिद्धि। पक्षतावच्छेदकसुवर्णमयप्रस्तर स्वरूपधर्माप्रसिद्धे। तस्य साध्यत्वरूपत्वे हेतुस्वरूपत्वे वाङ्गीकारे तदुभय विशेषणीभूतधर्मस्य साध्यतावच्छेदकस्य हेतुतावच्छेदकस्य वाऽप्रसिद्ध्या तत्र साध्यासिद्धत्वं हेत्वसिद्धत्वं वा बोध्यम्। साध्यनिश्चयार्थं हेतु साध्ययोरुभयोरेवावश्यकतया तयो कियदंशेमात्रीकत्वे व्याप्तत्वलीकत्व मप्रसिद्धत्व वेति कथनेन साध्यासिद्धिहेत्वसिद्धयो पृथक्पृथक्त्वमङ्गीकृत्य केवल व्याप्यत्वासिद्ध्यन्तर्गतत्वमङ्गीकृतमित्यवधेयम्।

पु०—पितर! तिष्ठतु तद्यत्र हेत्वाभासविषयकविचार, इत प्रागा त्मनिरूपणावसरे सक्षेपत प्रदर्शितस्यानुमानस्य भेदादिकमत्र विस्तरेण प्रदर्शनीयम्।

पि०—वत्स! तस्मिन् स्थले पूर्ववच्छेषवत्सामान्यतोदृष्टभेदैरनु मानस्य त्रैविध्यमुक्त्वा तत्तल्लक्षणान्यपि सक्षेपत प्रदर्शितानि। तानि साम्प्रतमत्र विस्तरेण प्रतिपाद्यन्ते। यत्रानुमानात्प्राक् साध्यस्य साध्यता वच्छेदकपुरस्कारेण प्रसिद्धि कश्चिद्दृश्येत तत्र तादृशानुमानमेव पूर्वव दनुमानम्। यथा 'पर्वतो वह्निमान् धूमा' दित्यत्र पक्षभूतपर्वते वह्नित्व पुरस्कारेण वह्न्यनुमानात्प्रागपि महानसादौ तद्धर्मपुरस्कारेण गृहीततया तत्र पूर्ववदनुमानम्। यत्रानुमानात्प्राक् पक्षादौ साध्य केनापि रूपणा प्रसिद्धोऽपि केवलमनुमानप्रमाणबलेनैव पक्षेऽनुमितो भवति तथाविधानु

मानमेव शेषवदनुमानम्। एतदनुमानमवीतानुमानं परिशेषानुमानं चेत्यपि वदन्ति। यथा 'पृथिवी पृथिवीतरेभ्योऽपि भिद्यते, गन्धवत्त्वा'दित्यादि। अत्र पृथिवीतरजलादिद्रव्ये गुणादिपदार्थषट्के प्रत्यक्षतो गन्धात्मकगुणासत्त्वेन जलादिसकलपदार्थभिन्नपृथिवीरूपद्रव्ये गन्धस्यानुमितिर्भवत्येव। किन्त्वनुमानात्प्राक्कचिदपि तद्व्येऽनिश्चितेऽपि केवलमनुमानबलेनैव पृथिव्यात्मकपदार्थलाभात्तादृशानुमानं शेषवदनुमानमिति वदन्ति। यत्रानुमानात्प्राक् साध्यतावच्छेदकरूपेण साध्यप्रसिद्धौ सत्यामपि किमप्येकसामान्यधर्मपुरस्कारेणान्यत्र साध्यप्रसिद्धिरनुमीयते तत्र तादृशानुमानमेव सामान्यतोदृष्टानुमानम्। यथा 'रूपादिप्रत्यक्षे इन्द्रियं करणं भवितुमर्हति, क्रियावत्त्वा'दित्यत्रेन्द्रियं पक्षः, करणत्वं साध्यः, क्रियावत्त्वं च हेतुः। अत्रेन्द्रियत्वरूपधर्मस्य साध्यविशेषणत्वेन साध्यतावच्छेदकधर्मस्वरूपतयाऽनुमानात्प्रागपीन्द्रियत्वपुरस्कारेणेन्द्रियं न कथमपि निश्चिनुयात्। कस्मिंश्चिद्वस्तुनीन्द्रियमिति ज्ञानं प्रसिद्धिर्वा न सम्भवतीत्यर्थः। तथापि करणत्वरूपसकलसाधारणधर्मपुरस्कारेण कुठारादीनां सामान्यतश्छेदनादिरूपक्रियासु करणत्वप्रसिद्धिरस्ति। या या क्रियास्ता सर्वाः करणसाध्या भवितुमर्हन्ति, छेदनादिक्रियाणां कुठारादिरूपकरणैर्गमनादिक्रियाणामश्वपदादिरूपकरणैर्भोजनादिक्रियाणां च हस्तमुखादिरूपकरणैः सिद्धिदर्शनात्। इत्थं व्याप्तिनिश्चये रूपादिदर्शनक्रियायां च करणत्वसिद्धये कारणान्तरासम्भवात् 'इन्द्रियमेव करण'मित्याकारकानुमानाच्च तस्मिन् स्थले सामान्यतोदृष्टानुमानम्। एतदनुमानत्रयं केचनान्यथा व्याचक्षन्ते। यथा कारणलिङ्गकानुमानं पूर्ववदनुमानं, कार्यलिङ्गकानुमानं शेषवदनुमानं कार्यकारणभिन्नलिङ्गकानुमानं च सामान्यतोदृष्टानुमानमिति। तन्मते मेघोन्नतिदर्शनेन वृष्टेरनुमानम्, नृपादिकोपदर्शनेन च भविष्यदपकारानुमानमेव पूर्ववदनुमानम्। मेघाच्छन्नादिकारणदर्शनेन वृष्ट्यादिरूपकार्यस्य, नृपादि

कोपकारणदर्शनेन चानिष्टात्मककार्यानुमानात्। कार्यद्वारा कारणानुमानमेव कार्यलिङ्गकानुमानम्। यथा नदीवृद्धयादिदर्शनेन पार्वत्यादिप्रदेशेषु वृष्ट्यनुमान, कस्यचित्पाण्डित्यसन्दर्शनेन तस्याध्ययनाद्यनुमान, धूमादिदर्शनेन च वह्न्याद्यनुमानम्। यद्वस्तु यस्य न कार्य, नापि कारण तद्वस्तुदर्शनेन यत्र वस्त्वन्तरानुमान तत्र तदनुमान सामान्यतोदृष्टानुमानम्। यथोड्डीयमानबलाकादिपरिदर्शनेन दूरत एव सन्निकटवर्तिजलाशयानुमानं, निजोदरदर्शनेन स्वपृष्ठानुमानं, मनुष्यादिजन्मदर्शनेन च तन्मरणानुमानम्। अत्र बलाकाजलाशयोरुदरपृष्ठयोर्जन्ममरणयोश्च कार्यकारणभावासत्त्वेऽपि वस्तुगत्या बकजलाशययोरुदरपृष्ठयोश्च नियतसाहचर्यदृष्टया 'मनुष्यादिजीवो मरणशीला भवितुमर्हति, जन्मवत्त्वा"दित्यनुमानेन चात्र सामान्यतो दृष्टानुमानमित्यवधेयम्। इदन्तव्याख्यानुसारेण जगत्प्रकार्यं दृष्ट्वा "क्षित्यङ्कुरादिक कर्तृजन्य, कार्यत्वाद्घटादिव"दित्यात्मकानुमानेनेश्वरानुमानमपि शेषवदनुमानान्तर्गतम्। प्रथमव्याख्यानुसारेणास्य सामान्यतोदृष्टानुमानान्तर्गतत्वमप्यवधेयम्। ईश्वरस्य पूर्वतोऽसिद्धत्वेऽपीश्वरस्वरूपसाध्यतावच्छेदकधर्मपुरस्कारेण तदनुमानात्। एतदनुमान पूर्वोक्तदिशा शेषवत्पूर्ववदुभयविधानुमान नेति वक्तु पार्यते। तत्रान्वयव्यतिरेकोभयविधव्याप्त्यभावात्। एतदनुमाने क्षित्यङ्कुरादिकं पक्ष, कर्तृजन्यत्वं साध्य, कार्यत्व च हेतु। अत्र "यद्यत्कार्यं तत्तत्कर्तृजन्य, यथा घटादि"रित्याकारकान्वयव्याप्त, "यत्कर्तृजन्य न भवति तत्कार्यं न भवति गगनादिव"दित्याकारकव्यतिरेकव्याप्तेश्च सत्त्वात्। केवल व्यतिरेकव्याप्तिस्थले तदनुमान शेषवदनुमानमवीतानुमानं वावधेयम्। ईश्वरत्वप्रकारकेश्वरस्यसाध्यस्याप्रसिद्धत्वेऽपि सामान्यतो जगत्कर्तृत्वपुरस्कारेण तत्र सामान्यतोदृष्टानुमानमिति बोध्यम्। अनुमितिम्त्वायत्कुत्रचित्स्थले प्रमा? क्वचिद्वा स्थलेऽप्रमा? इत्यपेक्षायामुच्यते। यत्र स्थले साध्यव्याप्य-

हेतुनिश्चयस्य परामर्शप्रतिबन्धकीभूतपदार्थस्य वा विद्यमानता तत्र भ्रमानुमिति, यत्र च स्थले साध्यव्याप्यपक्षे साध्यव्याप्यहेतोर्निश्चयोऽस्ति, किम्वा तत्र तद्रूपपरामर्शसत्त्वेऽनुमितिर्भवति तत्रैव प्रमानुमितिरित्यवधेयम्।

इति श्रीदामोदरमहापात्रशास्त्रिकृतन्यायादर्शेऽनुमानखण्डः ।

## अथोपमानखण्ड ।

पु०—पितः ! भवतु तर्हि, साम्प्रतमत्र पूर्वोक्तोपमानप्रमाणनिरूपणे मानुगृह्णस्तु माम्।

पि०—वत्स! "उपमितिकरणमुपमान"मित्युपमानलक्षणम्। तत् 'अतिदेशवाक्यार्थज्ञानात्मकम्'। अतिदेशस्तावदितरधर्मस्येतरस्मिन् प्रयोगाय प्राप्तिः। तत्प्रतिपादकवाक्यमेवातिदेशवाक्यम्। पदपदार्थसम्बन्धज्ञानविशेष एवोपमितिः। पदपदार्थयोः सम्बन्धः शक्तिरित्यर्थः। घटपटादियावत्पदार्थानां सादृश्यज्ञानमेवात्रोपमितौ करणम्। गवयादिपदानां तत्पदनिष्पन्नपशुविशेषसंज्ञिभिः सह वाच्यवाचकभावसम्बन्धः। गवयादिसंज्ञाभ्यो गवयादिपशुविशेषस्योऽर्थोऽवगम्यत एव। तादृशसंज्ञासंज्ञिनोर्वाच्यवाचकभावात्मकशक्तिज्ञानमेवोपमितिप्रमा। गवयपशौ गोः सादृश्यस्य साधर्म्यस्य वा दर्शनमेवोपमितिकरणमुपमानप्रमाणं वा। 'गोसदृशो गवय' इत्याकारकातिदेशवाक्यार्थस्मरणमेवात्र व्यापारः।

किञ्चातिदेशो नाम "यथा तथे"त्याकारकशब्दप्रयोगवन्नैकवस्तुगतधर्मस्यापरवस्तुनि व्यक्तीकरणम्। स च 'यथा गौस्तथा गवय" इत्याकारवाक्यात्मकः। यथा कश्चिद्ग्रामीणः केवलं गामवलोकितवान्, किन्तु गवयपशुं कदाचिदपि नावलोकितवानसौ कदाचित्कस्माच्चिदरण्यकपुरुषात् "गोसदृशो गवय" इति श्रुतवान्। अथ कदाचिदरण्यं गतवतस्तस्य गवय

पशुदर्शनानन्तरं पूर्वोक्तातिदेशवाक्यस्मरणेन गवयसञ्ज्ञया गवयपिण्डरूपसञ्ज्ञिनि तादात्म्यसम्बन्धज्ञानं समुत्पद्यते। अत्र सञ्ज्ञापदेन पदं सञ्ज्ञिपदेन चार्थं, तयोः सम्बन्धः शक्तिः, तेन 'पदपदार्थसम्बन्धज्ञानमेवोपमिति'रित्यवगम्यते। इतोऽवगम्यते प्रथमं गवयपिण्डदर्शनं ततोऽतिदेशवाक्यस्मरणं ततश्चोपमितिः समुत्पद्यत इति। एतदुपमानप्रमाणबलेनैव मनुष्यपशुपक्ष्यादिप्राणिनां वृक्षलताशिफामूलाद्यौषधीनां नानाविधव्यवहार्यपदार्थानां च परिचितिं सम्पत्स्यत एव लोकस्य। आकृतिविशिष्टपदार्थपरिचयाय सादृश्यपदार्थस्य पदशक्तिज्ञानाय चोपमानस्यैवावश्यकता। वस्तुपरिचयाय सादृश्यज्ञानं यथावश्यकं तथानेकस्थलेषु तदर्थं वैधर्म्यज्ञानमप्यावश्यकम्। यथा कस्यचिल्लोकस्य तिस्रश्चतस्रो वा कन्यका आसन्। अथ कदाचित् कश्चिदपरिचितो लोकस्तदन्तिकमागत्य तेन सह सम्भाषणेऽमासौ कन्यापिता तत्पाण्डित्यमुग्धोऽब्रवीदिदम्! मत्कन्यास्वन्यतमां भुवनसुन्दरीमध्यापयतु भवानिति। ततो 'भवत्कन्यकासु का सा पुनर्भुवनसुन्दरी'ति तेन पृष्टे तज्जनकेऽसावुदतरन्मत्कन्यकासु या तु कुञ्चितकेशा तामेव भुवनसुन्दरीति जानीयात्। तच्छ्रुत्वा तद्दर्शनेन तस्य तदानीं भुवनसुन्दरीपरिचयोऽभूत्। तदानीं तत्र स्थितासु तदन्यकन्यकासु कुञ्चितकेशित्वाभावात्। तत्र सादृश्यस्य साधर्म्यस्य वा ज्ञानाभावेऽपि साधारणस्त्रीत्वस्याद्य कन्यकासु चाविद्यमानस्याथच भुवनसुन्दर्यां विद्यमानस्य कुञ्चितकेशादिचिह्नस्य ज्ञानमेव भुवनसुन्दरीं परिचाययति। वस्तुतस्तु कुञ्चितकेशादिचिह्नमन्यनिष्ठधर्मो वैधर्म्यं चेति ज्ञातुमसौ प्रवृत्ततया सादृश्यप्रासङ्गेन च तच्चिह्नस्य तत्स्थले वैधर्म्यमिति ज्ञेयम्। तच्च वैधर्म्यज्ञानमुपमितिकरणमुपमानप्रमाणं चेति निर्णयम्। तेनोपमितौ गोसादृश्यविशिष्टपिण्डज्ञानं करणमतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः, उपमितिश्च फलमिति बोध्यम्। तदुपमानं त्रिविधम्। सादृश्यविशिष्टपिण्डज्ञानमाधर्म्यविशिष्टपिण्ड-

ज्ञानवैधर्म्यविशिष्टपिण्डज्ञानभेदात्। तेषु प्रथमं तूक्तम्। अथ द्वितीयतृतीयौ यथाक्रममुच्येते। यत्र—'यथा' कमप्यसाधारणधर्ममादायोपमितिरुत्पद्यते तत्रासाधारणधर्मविशिष्टपिण्डज्ञानोपमानम्। यथा कश्चिदारण्यकपुरुषः कमपि ग्रामीणपुरुषमुक्तवान् 'नासिकालसदेकशृङ्गोऽतिक्रान्तगजाकृतिर्जीवविशेष एव खड्गमृगः' इति। अथ कदाचित्तस्य श्रोतुस्तादृशपिण्डदर्शनेन प्रथममतिदेशवाक्यार्थस्मरणमनन्तरं च 'अयं पशुः खड्गमृगपदवाच्यः' इत्याकारकोपमितिर्जायते। अत्र नासिकालसदेकशृङ्गस्यैवासाधारणधर्मत्वात्। तृतीयं यथा—'यत्र किमपि वैधर्म्यमादायोपमितिरुत्पद्यते तत्र वैधर्म्यविशिष्टपिण्डज्ञानमेवोपमानम्। यथा—केनापि पुरुषेण कं प्रत्युक्तं 'यो हि पशुरतिकठोरकण्टकखादकोऽश्वादिवदसमानपृष्ठो लम्बग्रीवोऽसुन्दरकायश्च स एव करभः' इति। अथ कदाचित्तच्छ्रोतुस्तादृशपिण्डदर्शनेन प्रथमं तथाविधवैधर्म्यविशिष्टपिण्डज्ञानमुदेति, ततः प्रोक्तातिदेशवाक्यार्थस्मरणं, तत्पश्चाच्च 'अयं पशुः करभपदवाच्यः' इत्याकारकोपमितिरुत्पद्यते। अत्रोष्ट्राकृतिगततत्तद्विशेषाणां तदितरपशुगतवैधर्म्यसन्दर्शनात्।

इति श्रीदामोदरमहापात्रशास्त्रिकृतन्यायादर्शे
उपमानखण्डः।

## अथ शब्दखण्डः।

पु०—पितः! भवन्तु तर्हि, साम्प्रतं शब्दप्रमाणनिरूपणेन मां कृतार्थीकुर्वन्तु।

पि०—वत्स! शाब्दबोधसौकर्याय प्रथमं तदुपयोगिकतिपयपदार्थान् प्रदर्श्यानन्तरं तत्स्वरूपं प्रदर्शयिष्यते। यथा—आसत्त्यादयः, पदज्ञानम्, शक्तिज्ञानम्, लक्षणा चेति। तत्र योगबलेनातीन्द्रियात्मपदार्थपर्यन्त-

साक्षात्कारशक्तिसम्पन्नो भ्रमप्रमादादिशून्यो, यथार्थवक्ता वाऽऽप्त । यथा वेदव्यासवाल्मिकिमनुयाज्ञवल्क्यादित्रिकालदर्शिनो मुनय । पदसमूहो वाक्यम् । सुप्तिङन्तचय पदसमूह । अर्थबोधकशक्तिविशिष्ट पदम् । "शक्तिमत्त्व पदत्व"मिति तल्लक्षणात् । शक्तिस्तु शक्तिलक्षणान्यतरस्वरूपा । शक्तिस्तावत् 'अस्मात्पदादयमर्थो बोद्धव्य' इत्याकारकेश्वरसङ्केतरूपा, ईश्वरेच्छारूपा वा, ईश्वरसङ्केत एव शब्दार्थसम्बन्ध । तथा सति 'आप्तोपदेश एव शब्दप्रमाणमागमप्रमाण च'ति । पूर्वोक्तवाक्यार्थज्ञाने चतुर्णामाकाङ्क्षायोग्यतासन्निधितात्पर्यज्ञानानां कारणता परिदृश्यते । तत्राकाङ्क्षा सम्बन्ध , योग्यता सामर्थ्यम् , सन्निधि सामीप्यम् , तात्पर्यज्ञानं च वक्तुरभिप्रायज्ञानमित्यर्थ । प्रोक्तपदमपि चतुर्विधम् । यौगिकयोगरूढयौगिकरूढरूढभेदात् । तत्र योगात् प्रकृतिप्रत्ययार्थसम्बन्धादधिगतो 'यौगिक' । प्रकृतिप्रत्ययलभ्यार्थवाचक शब्द इत्यर्थ । यथा पाच कर्तृत्ववाचकपाचकादिशब्द । योगोऽवयवशक्ति , रूढिश्च समुदायशक्ति एते निधेते अन्वेति 'योगरूढ' । अवयवशक्त्या समुदायशक्त्या चार्थबोधकशब्दा योगरूढ इत्यर्थ । यथा पङ्कजादिशब्द । अत्रोभयशक्त्या पङ्कजन्यकर्तृत्वरूपावयवार्थविशिष्टपद्मत्वविशिष्टपदार्थबोधात् । न पङ्कजाते कुमुदादौ स्थलजाते पद्मे च तत्पदप्रयोगप्रसङ्ग शङ्कनीय । तत्रोभयार्थबाधनात् । ये पुन कश्चिद्योगबलेन स्वातन्त्र्येणार्थं बोधयन्ति, क्वचिच्च रूढिबलेनापि स्वातन्त्र्येणार्थं बोधयन्ति त एव 'यौगिकरूढा' । यथोद्भिदादिशब्दा । उद्भिच्छब्दस्तु लोके योगबलेनोर्ध्वभेदनकरणरूपार्थमादाय तरुगुल्मादर्थं वेदे च पुनस्तया वैदिकरूढिबलेन 'उद्भि'न्नामकयागविशेषरूपार्थमपि बोधयति । 'ये पुन शब्दा केवल रूढिबलेन प्रसिद्धिबलेन वार्थं बोधयन्ति त एव रूढा । यथा—घटपटकम्बलगृहद्वारप्रभृतय । रूढिपदेऽवयवावयविनोरयोर्विद्यमानत्वमस्त्यत्र । किन्तु तदुभययोरुपरियते मार्गेन

प्रसिद्धिबलेन समुदायशक्तिबलेन चार्थबोधोऽभूदिति तान् केवल 'रूढा' इति वदन्ति ।

अथ वाक्यार्थप्रकार पूर्वोक्तपदार्थाना लक्षणोदाहरणानि च यथाक्रम प्रदर्श्यन्ते । यथा 'अहं गच्छामि' 'राम खादति' चेत्यादीनामेव वाक्यत्वम् । तत्रैकाधिकपदाना विद्यमानत्वात् । वाक्यार्थज्ञाने वाक्यघटकपदज्ञानस्यैव कारणता । तत्तद्वाक्यघटकानाम् 'अहम्, गच्छामि, राम, खादति' चेत्यादिपदाना ज्ञानमन्तरेण तत्तद्वाक्यार्थज्ञानासम्भवात् । वाक्यघटकतत्तत्पदार्थस्मरणमेव तत्र व्यापार । तत्तत्पदज्ञानस्य तत्तत्पदमात्रजन्यत्वेन गमोत्तरदेशसंयोगानुकूलव्यापारात्मकगमनरूपार्थस्य रामरूपबालकस्य भोजनरूपार्थस्य च स्मरणव्यतिरेकेण तस्यानुत्पन्नत्वात् । 'राम खादती'त्याकारकवाक्यात् 'शक्तिमूलको रामात्मकबालको भक्षती'-त्याकारकवाक्यार्थज्ञानात्मकशाब्दबोध एव शब्दप्रमाणफलम् । 'अयं घट' अयं पट'इत्यादौ 'अस्मात्पदादयमर्थो बोद्धव्य' इत्याकारकेश्वरेच्छात्मकशक्तिविशिष्टाना कम्बुग्रीवादिमद्घटादिपदाना प्रहरणाच्छादकादिबोधकपटादिपदाना चैव पदत्वमवधेयम् । पदार्थयो सोऽभ्यरेच्छासङ्केतरूपसम्बन्ध प्रतिपाद्यप्रतिपादकभावसम्बन्धो वा तिष्ठति, तत्सम्बन्धमादायैव च वाक्यार्थज्ञान भवति । यस्मिन् स्थले शब्दशक्तिबलेन वाक्यार्थज्ञानं नैव सम्भवति तत्र लक्षणाशक्त्या वाक्यार्थज्ञान सम्पादयेत् । लक्षणा नाम शक्तिविशिष्टपदेन सहार्थस्य परम्परासम्बन्धरूपा । यथा—"गङ्गाया घोष" इत्यत्र गङ्गापदस्य भगीरथखातावच्छिन्नजलप्रवाहरूपार्थो घोषपदस्य च गोपालग्रामरूपार्थ । गङ्गाया गोपालग्रामावस्थानासम्भवेन शब्दशक्तिबलोपलभ्यतादृशवाक्यार्थज्ञानाभावात् 'स्वसामीप्यरूपपरम्परासम्बन्धेन गङ्गापदात्तीररूपपदार्थोपस्थितौ 'गङ्गातीरे गोपालग्रामो वर्तते' इत्याकारकवाक्यार्थबोधो जायते । यच्छक्तिबलेनात्र तादृशवाक्यार्थबोध सम्भवति सैव लक्षणाशक्ति । स्वपदेनात्र

अत्र वक्तुस्तात्पर्यं न केवल काकेभ्य एव दधिसंरक्षण, किन्तु दध्युपघातकानां काकबिडालकुक्कुरादिजीवानां वारणमेव तस्य तात्पर्यम्। तथा सत्यत्र काकशब्दमुख्यार्थस्य वायसजीवमन्तरेणान्यत्रासम्भवतया तद्वाक्यार्थतात्पर्यानुपपत्त्या तन्मुख्यार्थपरित्यागेन दध्युपघातकत्वरूपधर्ममादाय तद्वाक्ये तत्सर्वेषां धर्त्तव्यत्वेनेयं जहदजहल्लक्षणा जहदजहत्स्वार्थलक्षणा वेत्युच्यते। अत्र प्रथम काकपरित्यागेन तदितरदध्युपघातकमार्जारादिकपदान्वयात्। यदत्र त्वया प्रष्टव्य काकादिपदानां शक्ति सम्बन्धो वा तत्तद्व्यक्तौ स्वीक्रियते ? उतान्यत्र कस्मिंश्चित्पदार्थे इति। अत्रोच्यते। प्रत्येकपदेषु विशेष्यविशेषणभेदेनार्थद्वयमस्ति। तत्र काकादिपदं विशेष्यं काकत्वादिपदं च विशेषणम्। एकस्यापि काकशब्दस्योच्चारणेनासंख्यासंख्यकाकबोधात्तत्तच्छब्दानां शक्ति सम्बन्धो वा विशेष्यांशभूततत्तद्व्यक्तावनङ्गीकृत्य विशेषणाभूतकाकत्वादिधर्मे तत्तज्जातौ वा स्वीक्रियते। व्यक्तौ शक्तिस्वीकारे तु काकादिष्वेकशब्दोच्चारणेन तत्काकादिशब्देन सह तत्तच्छब्दस्य शक्ति सम्बन्धो वावश्यं स्वीकर्त्तव्य। तथासति एककाकशब्दोच्चारणेन सकलकाकबोधो न घटेत। अन्यान्यकाकादिषु तादृशसम्बन्धासत्त्वात्। सम्बन्धमन्तरेण शब्दादर्थबोधो न सम्भवति। शब्दार्थयोरव्यवस्थापत्तेः। नापि शब्दार्थयो शक्ति सम्बन्धो वापलपितव्य। घटपटादिशब्देभ्योऽपि काकमार्जारादिरूपार्थबोधापत्ते। काकादिशब्देषु प्रतिशब्दमेकैका शक्ति नाङ्गीकर्त्तव्या। असंख्यासंख्यशक्तिस्वीकारे गौरवात्, काकत्वादिधर्मस्य तादृशजाते वैकत्वेन तत्र शक्ते सम्बन्धस्य वाङ्गीकारे लाघवाच्च। वस्तुतस्तु काकादिशब्देभ्यो नियमत एव काकत्वादिरूपेण वायसादिरूपार्थबोधात्काकादाविव काकत्वादौ शक्यार्थस्य शक्तिलभ्यार्थस्य वा स्वीकारो भवति नान्यथा। काकादिपदात् काकत्वादिधर्मबोधवद्घटत्वादिधर्मस्याऽपि बोधापत्ते। एतदर्थमेव व्यक्ति

धर्मयोरुभयत्रैव शक्ति सम्बन्धो वा स्वीकृत । न च केवलकाकत्वादि-धर्मे तथाविधजातौ वा शक्ति स्वीकर्तव्या । काकत्वादिजातीनाम-मूर्तपदार्थत्वेन नित्यत्वेन च तासु क्रियाविनाशोभयासम्भवेन 'काक उड्डीयते, वसति, म्रियते चे'त्यादिव्यवहाराणामसमीचीनत्वापत्ते । काकत्वादिविशिष्टकाकाद्यनुगतैकविधशक्तिस्वीकारे लाघवात्काकादि-शब्देषु काकत्वादिप्रकारेण नियमितज्ञानाभावाच्च काकादिशब्दस्तद्गत-काकत्वादिजातिशोभे एव शक्यार्थस्वरूपे इति निर्णयम् । अत एव काकत्वरूपविशेषणांशत्यागेन काकरूपविशेष्यांशपरिग्रहादस्मिन् स्थले दधिघातकत्वरूपेण काकमार्जारादौ काकपदलक्षणाङ्गीकारादियं लक्षणा जहदजहत्स्वार्थलक्षणेति निगदन्ति । किञ्च कस्य चिन्नृपस्य मृगया-गमनदशायामरण्यमध्ये दृष्टपूर्वव्याघ्रादिजन्तुदर्शनेन स्वहस्तगतरत्न-मुद्रिकादिसन्दर्शनेन वा तदानीं तस्य 'सोऽयं सिंहादि' 'सेयं मुद्रिका चे'त्याकारेण प्रत्यभिज्ञादशायां पूर्वस्मृतिदेशकालाभ्यां सह सिंहादे-र्मुद्रिकायाश्च 'स' 'सा' इत्येतौ तच्छब्दस्यार्थभूतौ, एतद्देशैतत्कालाभ्यां च सह 'सिंहोऽयम्' 'मुद्रिकेय'मितीदम्शब्दस्यार्थभूतौ सम्बध्यते, किन्तु पूर्वपरकालसन्निहितासन्निहितदशात्मकविशेषणांशमादाय परस्परविरुद्धार्थ-द्वयस्य सामानाधिकरण्यज्ञानस्याभेदान्वयभूतस्य 'सोयम्' 'सेयम्' चेत्या-कारकज्ञानस्याभावेन विरुद्धदेशकालात्मकविशेषणांशत्यागेन 'सोऽयम्' 'सेय'मित्यत्र तदिदम्शब्दयोरेकमात्रविशेष्यभूतव्याघ्रमुद्रिकारूपोऽर्थ इति स्वीकारादियं लक्षणा जहदजहल्लक्षणेत्यङ्गीकृतम् । पूर्वोक्तस्थलेऽप्येक-भागत्यागेनापरभागस्वीकारादियं भागलक्षणेत्यपि वक्तुं पारयेत् । इयं लक्षणा शुद्धागौणीभेदेनापि द्विविधा । तत्र यत्र शक्यार्थस्य साक्षात्-सम्बन्धेन विद्यमानत्वसत्त्वेऽपि लक्षणाङ्गीक्रियते तत्र शुद्धलक्षणा । यथा— 'गङ्गायां घोष' इत्यत्र गङ्गापदस्य भगीरथखातावच्छिन्नजलप्रवाहरूप-

धर्मयोरभयत्रैव शक्तिः सम्बन्धो वा स्वीकृतः। न च केवलकाकत्वादिधर्मे तथाविधजातौ वा शक्तिः स्वीकर्तव्या। काकत्वादिजातीनाममूर्तपदार्थत्वेन नित्यत्वेन च तत्र क्रियाविनाशोभयासम्भवेन 'काक उड्डीयते, वसति, म्रियते चे'त्यादिव्यवहाराणामसमीचीनत्वापत्तेः। काकत्वादिविशिष्टकाकाद्यनुगतैकविधशक्तिस्वीकारे लाघवात्काकादिशब्देषु काकत्वादिप्रकारेण नियमितज्ञानाभावाच्च काकादिशब्दानां तद्गतकाकत्वादिजातिद्वये एव शक्यार्थस्वरूपे इति निर्णयम्। अत एव काकत्वरूपविशेषणांशत्यागेन काकरूपविशेष्यांशपरिग्रहादस्मिन् स्थले दध्युपघातकत्वरूपेण काकमार्जारादौ काकपदलक्षणाङ्गीकारादिमां लक्षणां जहदजहल्लक्षणेति निगदन्ति। किञ्च कस्य चित्पुरुषस्य मृगयागमनदशायामरण्यमध्ये दृष्टपूर्वव्याघ्रादिजन्तुदर्शनेन स्वहस्तगतरत्नमुद्रिकादिसन्दर्शनेन वा तदानीं तस्य 'सोऽयं सिंहादिः' 'सेयं मुद्रिका चे'त्याकारेण प्रत्यभिज्ञादशायां पूर्ववृत्तिदेशकालाभ्यां सह सिंहादेर्मुद्रिकायाश्च 'सः' 'सा' इत्येतौ तच्छब्दद्वयार्थभूतौ, एतद्देशैतत्कालाभ्यां च सह 'सिंहोऽयम्' 'मुद्रिकेयं'मितीदम्शब्दद्वयार्थभूतौ सम्बध्येते, किन्तु पूर्वपरकालसन्निहितासन्निहितदेशात्मकविशेषणांशमादाय परस्परविरुद्धार्थद्वयस्य सामानाधिकरण्यज्ञानस्याभेदान्वयभूतस्य 'सोयम्' 'सेयम्' चेत्याकारकज्ञानस्याभावेन विरुद्धदेशकालात्मकविशेषणांशत्यागेन 'सोऽयम्' 'सेयं'मित्यत्र तदिदम्शब्दयोरेकमात्रविशेष्यभूतव्याघ्रमुद्रिकारूपोऽर्थ इति स्वीकारादिमां लक्षणां जहदजहल्लक्षणेत्यङ्गीकृतम्। पूर्वोक्तस्थलेष्वेकभागत्यागेनापरभागस्वीकारादिमां भागलक्षणेत्यपि वक्तुं पारयेत्। इयं लक्षणा शुद्धागौणीभेदेनापि द्विविधा। तत्र 'यत्र शक्यार्थस्य साक्षात्सम्बन्धेन विद्यमानत्वसत्त्वेऽपि लक्षणाङ्गीक्रियते तत्र शुद्धलक्षणा। यथा—'गङ्गायां घोष' इत्यत्र गङ्गापदस्य भगिरथखाताविच्छिन्नजलप्रवाहरूप-

शक्यार्थसरस्तेऽपि तत्तीरे 'स्वसामीप्यसम्बन्ध'रूपलक्षणास्वीकारात्तत्सामीप्यस्य च वस्तुतः संयोगसम्बन्धेन विद्यमानतया साक्षात्सम्बन्धरूपैव शुद्धलक्षणा ज्ञेया। 'यत्र परम्परासम्बन्धात्मकलक्षणयैव शक्यार्थो गृह्यते तत्र गौणी लक्षणा'। यथा—अज्ञत्वस्यातिशय्यप्रकटनाय 'अयमेको गौः' ब्राह्मणे प्रकृतिकुपितत्वस्य राज्ञि च दुर्धर्षत्वस्य द्योतनाय 'अयं ब्राह्मणो राजा च वह्निः', विषयदुरवगाहत्वद्योतनाय च 'अयं समुद्र'श्चेत्यादिस्थलेषु गोपदस्य 'स्वशक्यवृत्तिजाड्यवत्ता' रूपपरम्परासम्बन्धेन मनुष्ये, वह्निपदस्य 'स्वशक्यवृत्तितापकत्वाद्यतिशयवत्ता' रूपपरम्परासम्बन्धेन ब्राह्मणनृपयोः, समुद्रपदस्य च 'स्वशक्यगाम्भीर्याद्यतिशयवत्ता' रूपपरम्परासम्बन्धेन पुस्तकादौ शक्यार्थग्रहणात्तत्स्थलेषु गौणीलक्षणावधेया। किञ्च 'द्विरेफ'पदस्य 'स्वशक्यरेफद्वयविशिष्टभ्रमरपदवाच्यत्वरूप' परम्परासम्बन्धेन भ्रमररूपार्थबोधस्थले द्विरेफपदस्य या लक्षणा स्वीक्रियते सापि गौणीलक्षणैव। केचन केवलसादृश्यसम्बन्धरूपलक्षणा गौणी, तद्भिन्नसम्बन्धरूपलक्षणा च शुद्धेति निगदन्ति। लक्षणाया मुख्यकल्पत्वाप्रसूतत्वेन शक्यत्वव्यवृत्तित्वेन चानादरणीयत्वं मुख्यप्रयोगस्यैवादरणीयत्वमित्यवधेयम्। आलङ्कारिकास्तावच्छब्दानां कामप्यपरां व्यञ्जनाशक्तिमङ्गीकुर्वन्ति। सा व्यञ्जना क्वचिच्छब्दशक्तिमूला क्वचिच्चार्थशक्तिमूलापि भवति। किन्तु वयं तां नाङ्गीकुर्मः। अनुमानप्रमाणेनैव तस्य तल्लक्षणान्तर्गतत्वेनान्यथासिद्धत्वात्।

पु०—पितः! अस्तु तर्हि, साम्प्रतमालङ्कारिकमतोक्तव्यञ्जनाशक्तिं निरूप्य तस्याः कुतो वा लक्षणान्तर्गतत्वमित्यपि कृपया प्रदर्शनीयम्।

पि०—वत्स! स्वार्थबोधविरतासु तिसृष्वभिधालक्षणातात्पर्यात्मकवृत्तिषु यया वृत्त्या शक्त्या वाऽपरार्थोऽवगम्यते सैव व्यञ्जनावृत्तिः। यथा शब्दः शब्दान्तरबोधको भवति तथा तात्पर्यमप्यर्थान्तरव्यञ्जकं भवति।

सा व्यञ्जना द्विविधा। शाब्दीव्यञ्जनार्थीव्यञ्जनाभेदात्। तत्र शाब्दीव्यञ्जनापि द्विविधा। अभिधामूलालक्षणामूलाभेदात्। तयोर्मध्ये यत्र कस्मिंश्चिदनेकार्थकशब्दे संयोगादिसम्बन्धविशेषैरेकस्मिन्नर्थे निर्द्धारिते सत्यपि तत्र या शक्तिः पुनरन्यार्थप्रतीतिकारणं भवति तच्छक्तिरेवाभिधामूला व्यञ्जना। 'अनेकार्थकशब्दः कुत्र? किमात्मकार्थबोधको? भवे'दित्याकारकसन्देहोपस्थितिकाल एव संयोगादिसम्बन्धा अर्थविशेषबोधनियामका भवन्ति। ते च सम्बन्धाः संयोगविप्रयोगसाहचर्यविरोधितार्थप्रकरणलिङ्गशब्दान्तरसन्निधिसामर्थ्यौचितीदेशकालव्यक्तिस्वरादिरूपा भवन्ति। एषामुदाहरणानि यथाक्रमं प्रदर्श्यन्ते यथा—तेषु संयोगः सन्निकर्षः। 'सशङ्खचक्रो हरि'रित्यत्रानेकार्थकोऽपि हरिशब्दो विष्णुमेव बोधयति न सिंहमर्कटादिकम्। विष्णावेव शङ्खचक्रसंयोगसत्त्वात्। विप्रयोगो विरहः। यथा—'फणाहीनो नाग' इत्यत्र नागशब्दः सर्पमेव बोधयति न तु हस्त्यादिकम्। सर्पस्यैव फणायोगवियोगसम्भवात्। साहचर्यं सङ्गः। यथा—'रामलक्ष्मणा'वित्यत्रानेकार्थकोऽपि रामशब्दो दाशरथिमेव बोधयति न [illegible] परशुरामादिकम्। दाशरथेरेव लक्ष्मणसाहचर्यसम्भवात्। विरोधिता वैरम्। यथा—'रामार्जुना'वित्यत्रानेकार्थकावपि रामार्जुनशब्दौ तयो रामशब्दो भार्गवं न तु रामचन्द्रमर्जुनशब्दश्च कार्त्तवीर्यमेव बोधयति न तु पाण्डुपुत्रार्जुनादिकम्। तयोरुभयोरेव विरोधित्वदर्शनात्। अर्थः प्रयोजनम्। यथा—'स्थाणुं भज भवच्छिदे' इत्यत्रानेकार्थकोऽपि स्थाणुशब्दः शिवमेव बोधयति न [illegible] शाखाहीनवृक्षम्। शङ्करादेव भवच्छेदात्मकप्रयोजनलाभात्। प्रकरणं प्रस्तावः। यथा—'यथाज्ञापयति देव' इत्यत्रानेकार्थकोऽपि देवशब्दो भवन्तं राजानं वा बोधयति न तु परमेश्वरादिकम्। नाटकीयप्रस्तावकत्वेन तादृशशब्दस्य तादृशार्थबोधकत्वात्। लिङ्गं विशेषकं चिह्नमिति यावत्। यथा—'कपर्दी भीम' इत्यत्रानेकार्थकोऽपि भीमशब्द-

शिवमेव बोधयति न तु कुन्तीपुत्रभीमादिकम्। कपर्दात्मकचिह्नविशेषद्वारा भीमशब्दस्य शिवमात्रबोधकत्वात्। शब्दान्तरसन्निधि प्रसिद्धार्थक-शब्दान्तरसाहित्यम्। यथा—'स्थलारविन्दश्रिय'मित्यत्रानेकार्थकोऽपि श्रीशब्द शोभामेव बोधयति, न तु लक्ष्म्यादिकम्। प्रसिद्धार्थकशब्दा-न्तरारविन्दशब्दसाहचर्येण श्रीशब्दस्य शोभामात्रबोधकत्वात्। सामर्थ्यं शक्ति। यथा 'मधुना मत्त कोकिल' इत्यत्रानेकार्थबाधकोऽपि मधुशब्दो वसन्तर्तुमेव बोधयति न तु मद्यादिकम्। वसन्तस्यैव कोकिलमादन सामर्थ्यात्। औचिती युक्तता। यथा—'गौरेका तु मनस्विन' इत्यत्रा-नेकार्थकोऽपि गोशब्दो वचनमेव बोधयति न तु गोरूपपश्वादिकम्। अत्रौ चित्यवशेन गोशब्दस्य वचनमात्रबोधकत्वात्। देश स्थानम्। यथा—'गगने चन्द्र' इत्यत्रानेकार्थकोऽपि चन्द्रशब्दश्चन्द्रमसमेव बोधयति न तु कर्पूरादिकम्। गगनात्मकस्थानेन सह चन्द्रमस एव सम्बन्धसत्त्वात्। काल समय। यथा—'रात्रौ विभावसु'रित्यत्रानेकार्थकोऽपि विभावसु शब्दो वह्निमेव बोधयति न तु सूर्यादिकम्। रात्रिरूपकालेन सहाग्नेरेव सम्बन्धसत्त्वात्। व्यक्ति स्त्रीपुंसादिलिङ्गम्। यथा—'मित्र भाती'-त्यत्रानेकार्थकोऽपि मित्रशब्दो नपुंसकलिङ्गविशिष्टस्सुहृद पुंलिङ्गस्सूर्यं च बोधयति। लिङ्गभेदेन मित्रशब्दस्य तत्तदर्थबोधकत्वात्। स्वरादि उदात्तानुदात्तस्वरितात्मक। स च वेद एव प्रसिद्ध। प्रयोजनबोधाय यत्र लक्षणामङ्गीक्रियते तत्रैव लक्षणामूला व्यञ्जना। यथा 'गङ्गाया घोष' इत्यत्र गङ्गापदाद्भगीरथखातावच्छिन्नजलप्रवाहरूपार्थबोधानन्तरमभिधा शक्तेश्च तद्रूपार्थबोधनान्तर लक्षणाशक्तिनिवृत्त पुनर्यच्छक्तिबलेन शीतत्व-पावनातिशयत्वादिरूपप्रयोजनमवगम्यते तच्छक्तिरेव लक्षणामूला व्यञ्जना। अथ व्यञ्जनाशक्तिर्निरूप्यते यथा—'वक्तृबोद्धव्यवाक्यानां ध्वनिविशेषा-दमकुकाकोश्चेष्टादिकस्य च वैशिष्ट्येन या हि शक्तिरन्यार्थं बोधयति

सैवार्थमूला व्यञ्जनाशक्ति। यथा—'गतोऽस्तमर्क' 'सन्ध्यावन्दनादि कस्यायमवसरो' वेत्यादावास्तिकद्विजातिवक्तृप्रतिपाद्यार्थाना 'गाव सहियन्ता, वय गृह प्रत्यावर्त्तामहे' चेत्यादौ गोपालादिवक्तृप्रतिपाद्यार्थाना च वक्तृवैशिष्ट्यमादाय प्रतीयमानत्वेन तत्तत्स्थलेष्वार्थी व्यञ्जना निर्णेया।

पु०—पितर! अस्तु तर्हि, रामश्यामादिपदाना तत्तद्बालकपिण्ड शक्तिरस्तीति यदुक्तं प्राक् तन्मया नाङ्गीकर्त्तव्यम्। अर्थेन सह शब्द स्येश्वरेच्छात्मकशक्तिस्वीकारेण तत्र तादृशशक्त्यभावात्।

पि०—वत्स! न चैवं वक्तु युज्यते। वक्ष्यमाणदिशा तन्निरा करणात्। तथा हि पदपदार्थयो परस्परसम्बन्धोऽस्ति यं शास्त्रीयमापया 'वृत्ति रिति वदन्ति। सा पदपदार्थोभयनिष्ठा। सैव पदवृत्तिर्द्विविधा। सङ्केतलक्षणाभेदात्। तत्र सङ्केतोऽपि द्विविध आधुनिकाजानिकभेदात्। तत्राधुनिकसङ्केतोऽनित्य आजानिकसङ्केतश्च नित्य। पुनराधुनिकसङ्केतोऽपि द्विविध लौकिकशास्त्रीयसङ्केतभेदात्। तत्र शास्त्रीयसङ्केत परिभाषा, शास्त्रकारेच्छा वति निगदन्ति। यथा व्याकरणे टिघिसंहितादिसंज्ञा। न्यायशास्त्रे च द्रव्यगुणादिसंज्ञा। एवं सकलशास्त्रेषु पारिभाषिकसङ्केतो वक्तव्य। लौकिकसङ्केतोऽपि नानाविध। प्रादेशिकदैशिककौलिकादि भेदात्। यथास्मद्गुरुकुले हरिआ, माधिआ, मोतीत्याद्याकारेण तत्तद्व्यक्ति- विषयकसङ्केता सन्दृश्यन्ते, तथा हिन्दिवङ्गतैलङ्गमहाराष्ट्रगुर्जरादिसकल देशेष्वपि तथाविधसङ्केता सन्दृश्यन्त एव। घटपटादिषु सर्वे तत्तच्छब्द प्रतिपाद्यार्था समानाकारा इति जानन्ति। तत्तच्छब्देषु 'अस्माच्छब्दा- दयमर्थो बोद्धव्य' इत्याकारकेश्वरेच्छात्मकाजानिकसङ्केतरूपशक्त विद्यमान त्वात्। सा चाजानिकशक्तिरपि द्विविधा। अवयवशक्तिसमुदायशक्तिभेदात्। तत्रावयवशक्तिं योगशक्ति, समुदायशक्ति च रूढि, प्रसिद्धिरिति वदन्ति।

तथाहि पाचककारकादिपदेषु सर्वत्र प्रकृतिप्रत्ययरूपावयवद्वयमस्ति। तत्र पचकृधात्वोर्ण्वुलोऽकादेशे पाचककारकपदद्वयसिद्धे। तत्र पचादिधातु प्रकृतिरकादिश्च प्रत्ययः। पचधातो पाके कृधातोश्च कर्त्तव्यरूपार्थे शक्तिर्कृत्-प्रत्ययस्य च कर्त्तरि शक्तिः। सम्मिलितवदुभयशक्तिबलेन पाचकपदात्पाक-कर्त्ता, कारकपदाच्च कार्यकर्त्तास्याकारकार्थोऽवगम्यते। तथा घटपदात्कलशस्य पटपदाद्वस्त्रस्य, मण्डपपदाच्च चतुष्कोणावच्छिन्नेष्टकप्रस्तरादिनिर्मितवस्था-कारस्थानविशेषस्य रूढिशक्तिबलेन, प्रसिद्धिशक्तिबलेन वाऽवगततया तत्तच्छब्दात् रूढि प्रसिद्धिर्वेति वदन्ति। व्याकरणज्ञानमन्तराऽवयवशक्ते-र्यौगशक्ते वा कोपलादित्यादिज्ञानमन्तरेण च समुदायशक्तेर्ज्ञानाभावात् प्रयोगव्यक्तिव्यवहारस्यापि शक्तिज्ञानेऽत्यावश्यकता तिष्ठति। नयायिकैरपि शक्तिज्ञानार्थमष्टविधप्रमाणमङ्गीक्रियते। तत्तु व्याकरणोपमानकोषाप्त-वाक्यव्यवहारवाक्यशेषात्मकार्थवाद्विवरणप्रसिद्धपदान्तरसन्निधानात्मकम्। "शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्यव्यवहारतश्च। वाक्यस्य शेषाद्विवृते र्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा" इति साम्प्रदायिकोक्ते। तेषु व्याकरणं यथा 'पक्ते'त्यत्र पचधातो कर्त्तरि तृच्प्रत्ययेन पक्तृशब्दस्य पाककर्त्तरि सङ्केतग्रहः। उपमानाच्छक्तिग्रह उक्त। कोषाच्छक्तिग्रहो यथा—'विष्णुर्नारायणः कृष्णः'—इत्यादौ विष्णुप्रभृतीनां नारायणे शक्ति-ग्रहः। अत्र कोषस्सुपलक्षणविधया गणपाठमपि बोधयति। उपलक्षणत्व नाम स्वार्थप्रतिपादकत्वे सति स्वेतरार्थप्रतिपादकत्वम्। तेन 'भू' सत्तायामित्यत्र भूशब्दस्य सत्तायामेव शक्तिग्रहः। आप्तवाक्याच्छक्तिग्रहो यथा—'अयमश्वशब्दवाच्य' इत्यादावश्वशब्दस्य शृङ्गरहितकेशमयपुच्छ विशिष्टपशुविशेष एव सङ्केतग्रहः। व्यवहाराच्छक्तिग्रहो यथा—कुत्रचित् स्थले द्वयोर्वृद्धयोर्मध्ये एको वृद्धोऽपरवृद्धमवदत् 'गामानय'ति। तद्-श्रवणेनासौ द्वितीयवृद्ध एका गां समानीतवान्। तत्र प्रथमवृद्ध

पुनस्तमकथयत् 'गां बधान, अश्वं चानये'ति। तच्छ्रुत्वासौ मध्यमवृद्धो गां बद्ध्वाश्वं समानीतवान्। तत्रैतत्सर्वमवलोकयतः कस्य चित्तृतीयपुरुषस्य गोशब्दाद्गलकम्बलविशिष्टपशुविशेषरूपार्थे, 'आनय' पदात् सम्मुखीकरणरूपार्थे, 'बधान' पदाद्बोधनरूपार्थे 'अश्वपदाच्च शृङ्गरहितकेशमयपुच्छविशिष्टपशुरूपार्थे यत्सङ्केतज्ञानमभूत्तत्र द्वितीयवृद्धव्यवहारस्यैव कारणत्वं मान्यम्। प्रोक्तसङ्केतबलेनार्थबोधकशब्दा एव साङ्केतिकशब्दाः। वाक्यशेषाद्विधिवाक्यशेषार्थवादवाक्यादिति यावत्। तत्र "इष्टसाधनत्वेन प्रमाणान्तराप्रतीतकर्मणः इष्टसाधनत्वप्रकारकबोधजनकवैदिकवाक्यं विधिः" "विधिप्रतिपादितकर्मणः प्राशस्त्यनिन्दान्यतरबोधकवैदिकवाक्यं अर्थवादः।" अर्थवादवाक्याच्छक्तिग्रहो यथा—"यवमयश्चरुर्भवति" "वाराही चोपानत्"इत्यादिश्रुतावार्या यवशब्दं दीर्घशूके वराहशब्दं च शूकरे प्रयुञ्जन्ते, म्लेच्छास्तु यवशब्दं प्रियङ्गौ वराहशब्दं च च कृष्णशकुनौ प्रयुञ्जते। तदुभयशब्दयोर्नानार्थकेऽर्थसन्देहे "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" "वराहं गावोऽनुधावन्ति"-इत्याकारकार्थवादवाक्यबलेन यवशब्दस्य दीर्घशूके वराहशब्दस्य [illegible] शूकरे सङ्केतग्रहः। विवृतेर्विवरणात्प्रतिशब्दादिति यावत्। अस्माच्छक्तिग्रहो यथा—'हरिर्नारायण' इत्यादौ हरिशब्दस्य मर्कटादिनानार्थबोधकत्वेऽपि तत्रार्थे सन्देहे जायमाने विवरणबलेन नारायण एव सङ्केतग्रहः। सिद्धपदस्य सान्निध्यतः सिद्धपदसमभिव्याहारादित्यर्थः। ततः शक्तिग्रहो यथा—"इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति"इत्यत्र मधु करोतीति मधुकर इति व्युत्पत्त्या मधुकारशब्दस्य सङ्केतग्रहो भ्रमरे? उत मधुमक्षिकायाम्? इत्याकारकसन्देहे जायमाने पूर्वं पद्मे भ्रमरस्यैव मधुपानसन्दर्शनेन कमलपदसमभिव्याहारात् मधुकरशब्दस्य भ्रमर एव सङ्केतग्रहो [illegible] मधुमक्षिकायाम्। समभिव्याहारः साहित्येनोच्चारणम्। आधुनिकसङ्केतस्य

पूर्वोक्तदिशा पारिभाषिकदैविकादिभेदेन नानात्वेऽपि वक्ष्यमाणदिशा तस्य द्वैविध्यमेवापादयन्ति। आजानिकसङ्केतः शक्तियोगो वा रूढिश्चेति। शक्तिबलेनार्थबोधकशब्दोऽपि त्रिविधः। यौगिकयौगिकरूढरूढभेदात्। तेषु 'अवयवशक्तिबलेनार्थबोधकशब्दा यौगिकाः।' यथा—पङ्कजादयः। एषां प्रसिद्धिबलेनैव पद्मरूपार्थबोधानन्तरं पङ्कोत्पन्नात्मकावयवार्थसम्बन्धसत्त्वात्। क्वचिच्च रूढिबलेन तदुभयस्थले स्वासम्बन्धेनार्थबोधकशब्दा यौगिकरूढाः। यथा—उद्भिदादयः। एषां योगबलेनोर्ध्वभेदनरूपार्थमादाय तरुगुल्मादिरूपार्थबोधकत्वाद्वैदिकरूढिबलेन चोद्भिन्नामकयागरूपार्थबोधकत्वात्। अत्र योगस्य रूढेश्चोभयोः स्वातन्त्र्यमवधेयम्। केवलं रूढिबलेन प्रसिद्धिबलेन वार्थबोधकशब्दा रूढिशब्दाः। यथा—घटपटगृहादिशब्दाः। अत्रावयवावयविशक्तयोर्विषमामत्वेऽपि तत्तच्छक्त्युपस्थितेः प्राक् प्रसिद्धिबलेनार्थोऽस्समुदायशक्तिबलेनार्थबोधात्। अत्रावयवशक्तिबलेन समुदायशक्तिबलेन वार्थबोधेऽपि तादृशार्थमादाय सर्वत्र स्थलेषु तात्पर्योपपत्त्यसम्भवात्तत्र लक्षणावृत्त्यनुसन्धानं कृतम्। सर्वत्र वाक्यार्थज्ञानेऽर्थाच्छाब्दबोधे आकाङ्क्षासत्तियोग्यतासन्निधीनां कारणता ज्ञेया।

पु०—पितरः! आकाङ्क्षादीनां स्वरूपं पुनः कीदृशम्? तेषां तत्र कारणत्वानङ्गीकारे वा का हानिः?

पि०—वत्स! वाक्यगर्भे स्थितयोः पदयोः पदानां वा यया परिपाट्या प्रकृतवाक्यार्थज्ञानं भवति, तामेव परिपाटीं तत्तत्पदानामाकाङ्क्षा। किम्वा 'यत्पदेन विना यत्पदं प्रकृतवाक्यार्थबोधेऽसमर्थं भवति तत्पदस्य तत्पदेन सहापेक्षा आकाङ्क्षा'। यथा—'रामो गच्छती'त्यादिवाक्यगर्भनिपतितयोः 'रामो गच्छती'ती पदयोः रामेण सहात्मकद्वितीयाविभक्तेर्गम-धातुना सह शप्प्रत्ययलट्विभक्त्योः परिपाटी वर्णक्रमो वा वर्तते, तद्वर्णक्रम

एव रामगमनरूपवाक्यार्थज्ञानार्थमावश्यकत्वेन प्रतीयते इति स एव तत्राकाङ्क्षा। किम्वा तद्वाक्ये रामपदेन विना क कुत्र ? गच्छती'-त्याकारेण, 'गच्छति' पदेन च विना 'राम किं कुर्या'दित्याकारेणाका ङ्क्षायां जायमानायां केवल तत्तत्पदात्तादृशवाक्यार्थज्ञानाभावात्तदुभय-पदयो परस्परापेक्षात्मकाकाङ्क्षासद्भाव स्वीकर्तव्य एव। वाक्यार्थ-ज्ञानेऽस्या कारणत्वानङ्गीकारे केवल रामपदादपि रामगमनरूपवाक्यार्थ-ज्ञानमापद्येत। न चात्र 'ओ'मित्युच्या। क्रियापदमन्तरेण कारक पदस्य कारकपदमन्तरेण च क्रियापदस्यान्वयासम्भवात्। 'यत्पदार्थेन सह यत्पदार्थस्यान्वयापेक्षा तिष्ठति तदुभययोरव्यवधानेन पदेनोपस्थितिरा-सत्ति'। यथा—'हरिमाहूय' 'विद्यालय यास्यती'त्यादौ। अस्या वाक्यार्थज्ञाने कारणत्वानङ्गीकारे 'हरिं विद्यालयम्' आहूय यास्यती'त्यादि वाक्यादपि वाक्यार्थज्ञानमापद्येत। न चात्र 'ओ'मिति श्वया। अत्र पूर्वोक्तवाक्यद्वयस्य विद्यमानत्वेन तद्वाक्यद्वयगर्भगतस्य 'विद्यालयम्' 'आहूये'ति पदद्वयस्य प्रत्येकवाक्यश्रवणे विच्छेदापादकतया तत्रासत्त्यभावे-ऽपि वाक्यत्वप्रसङ्गात्। "पदाना परस्परान्वये बाधाभावो योग्यता"। यथा—'जलेन सिञ्चती'त्यादौ सेचनक्रियाया जलेन सहान्वये कापिद्बाधा नास्तीति योग्यता तिष्ठति। अस्या वाक्यार्थज्ञानकारणत्वानङ्गीकारे 'वह्निना सिञ्चती'त्यादौ जलातिरिक्तवह्निप्रभृतिपदार्थेषु सेचनक्रियासम्भवेन वह्निजलयो परस्परसम्बन्धप्रयुक्तवह्नौ सेचनक्रियायोग्यत्वामात्रेऽपि वाक्यार्थज्ञानापत्ते। शाब्दज्ञानं प्रति योग्यतानिश्चसशयनिश्चयात्मक-साधारणज्ञानमात्रस्यैव कारणत्वेन प्राक् वाक्यार्थज्ञानात्सदा परस्पर सम्बन्धात्मकयोग्यतानिश्चयासत्त्वेऽपि क्वचित्संशयमादाय क्वचिच्च निश्चय-मादाय वाक्यार्थज्ञाने जायमाने तत्र न कापि हानिरिति ज्ञेयम्। 'पदाना-मविलम्बोच्चारणं सन्निधि।' यथा 'राम शेते' इत्यादौ सन्निधिस्तिष्ठति।

अस्य वाक्यार्थज्ञाने कारणत्वानङ्गीकारे इदानीं 'राम' इत्युच्चार्य प्रहरद्वयानन्तरं 'शेते' इत्युक्तावपि तत्र वाक्यत्वप्रसङ्गात्। केचन तात्पर्यस्यापि वाक्यार्थज्ञानकारणत्वमङ्गीकुर्वन्ति। 'वक्तुरिच्छैव तात्पर्यम्'। तत्र तदनङ्गीकारे लक्षणास्थले नानार्थबोधकशब्दप्रयोगस्थले च शाब्दबोधानुपपत्तेः। तथाहि 'गङ्गायां घोष' इत्यत्र गङ्गापदस्य भगीरथखातावच्छिन्नजलप्रवाहरूपार्थे, भोजनदशायाम् 'सैन्धवमानये'त्यत्र च सैन्धवपदस्य घोटकरूपार्थे जायमानेऽपि ज्ञाने तत्तत्स्थले वस्तुतः प्रकृततात्पर्यविषयीभूतगङ्गातीरलवणरूपार्थज्ञानाभावेन यथार्थशाब्दबोधाभावाच्छाब्दबोधे तात्पर्यज्ञानस्यापि कारणताभ्युपेया।

पु०—पितरः! लक्षणयानेकार्थबोधकशब्दशाब्दबोधस्थले तात्पर्यज्ञानस्य कारणता मयानङ्गीकर्तव्या। प्रकरणज्ञानादिनैव तथाविधज्ञानसिद्धेः।

पि०—वत्स! क्वचित्क्वचित्स्थले सति तात्पर्यसन्देहे कृतायामपि प्रकरणाद्यालोचनायां तदनुसन्धानदृश्यत्वं केवलतात्पर्यनिर्णय एव प्रवृत्ते निष्ठति न तु वाक्यार्थनिश्चये। तत्र तात्पर्यज्ञानस्यैव कारणत्वाङ्गीकारेण लाघवात्। अनियतप्रकरणादिज्ञानस्य वाक्यार्थकारणत्वाङ्गीकारे विप्रमोऽनन्तारम्भमपाक्षेपप्रयुक्तकल्पनागौरवाच्च। किं च यत्र स्थले वक्त्रभिप्रायस्य सङ्कल्पोऽप्यस्तेऽपि तत्राप्युपक्रमोपसंहारादिना वा नानाविधैरप्यनुसन्धानकरणे तदंशस्यां कृतायां वाक्यार्थज्ञानोत्पत्तिपक्षे समयविलम्बस्वीकरणस्य वैयर्थ्याद्व्याख्यानादिकेन वस्तुतात्पर्यज्ञानस्यैव प्रकरणादिपर्यालोचनाव्यतिरेकेणापि शाब्दबोधात्तत्र तात्पर्यज्ञानस्यापि कारणत्वमिति मे नई पाथानस्यैवाङ्गीकाराच्च प्रकरणादीनां न कारणत्वमित्यभ्युपेयम्। एतन्वाक्यमपि द्विविधम्। वैदिकलौकिकभेदात्।

पु०—पितर ! भवतु तर्हि, साम्प्रतमत्र वैदिकलौकिकवाक्य-स्वरूपादिकं कृपया निर्णयम् ।

पि०—स च वेदस्तावत्प्रथमं द्विविधः । मन्त्रब्राह्मणभेदात् । तत्र 'यज्ञादिकर्मानुष्ठानकालीनद्रव्यदेवतादिस्मारकवाक्यं मन्त्रः' । स तु "इषे त्वोर्जे त्वे"त्यादिरूपः । "यज्ञादिकर्मविधायकवचनं ब्राह्मणम्" । तद्ब्राह्मणमपि त्रिविधम् । विधिनिषेधार्थवादभेदात् । तत्र कर्मसु साक्षात्प्रवर्त्तकवाक्यं विधिः । यथा—"स्वर्गकामो यजेत" "गङ्गास्नानं कुर्यात्" "देवगुरुब्राह्मणान् पूजये"दित्यादिस्थलेषु विधिलिङ्लोटावास पश्चुरभिप्रायं प्रकाशयतः । तदभिप्रायमादाय 'नियोज्यकर्म एव पुरुषस्य स्वेष्टसाधन'मित्यनुमाय लोकास्तत्तत्कर्मसु प्रवर्त्तन्ते । वेदलोकयोरुभयत्रेष्ट साधनताज्ञानमन्तरेण तत्तत्कर्मसु लोकानामप्रवृत्तेः । यथा लोके गुरु ब्राह्मणराजाज्ञादिपालनेषु लोकाः प्रवर्त्तन्ते, तथा वेदेऽपि वेदवाक्यघटित-लिङ्लोटादिप्रत्ययश्रवणेन तत्रेश्वरेच्छात्मकशक्तिविद्यमानताबोधानन्तरं तत्तत्कर्माचरणे प्रवर्त्तन्ते । निषिद्धकर्मसु साक्षान्निवर्त्तकवचनं निषेधः । यथा 'परस्वं मा हर' 'सुरापानं मा कुरु' 'देवगुरुब्राह्मणान् मा निन्द' 'मा हिं-स्यात्सर्वाणि भूतानि' चेत्यादिस्थलेषु परस्वहरणसुरापानादीनां वर्ज्यत्वमेव । तेषामनिष्टसाधनत्वेन शास्त्रगर्हितत्वात् । "स्तुतिनिन्दान्यतरफलकविधि-निषेधसहायकवचनमर्थवादः" । यथा "सोमरसपानेनामृतो भवति" "वायु-र्वै क्षेपिष्ठा देवता" चेत्यादिवाक्ये सोमरसात्मकद्रव्यस्य शीघ्रगतिशीलवायु-देवतायाश्च प्रशंसामुखेन सोमवायव्ययागयोर्विधानादेव तत्तद्विधेस्तत्तद्वाक्य-स्यार्थवादवाक्यत्वम् । तथा "सुरापो नरकं व्रजेत्" "मिथ्याभाषी समाजशत्रु"श्चेत्यादिवाक्यानामप्यर्थवादत्वम् । सुरापानमिथ्यासम्भाषणयोर्निन्दापादकत्वेन निषिद्धकोऽयन्तर्गतत्वात् । वैदिकवाक्यानां भ्रमप्रमा-

दादिशून्याप्तोक्तित्वेन सर्वत्र प्रामाण्यमङ्गीक्रियते, लौकिकवाक्यानां चाप्तजनोक्तित्वे प्रामाण्यमनाप्तजनोक्तित्वे चाप्रामाण्यमवधेयम्।

पु०—पितः! भवतु तर्हि, साम्प्रतमत्र भ्रमादिपदार्थस्वरूपनिर्णयेनानुग्राह्यः।

पि०—वत्स! मनुष्यस्य भ्रमप्रमादविप्रलिप्साकरणापाटवाख्याः कतिपयस्वाभाविकदोषाः सन्ति, यद्बलेनासौ यथाभूतवस्तून्ययथाकारेणायथाभूतवस्तूनि च यथाभूतवस्तुस्वरूपेणावमन्यते। तेषु 'अन्यवस्तुन्यप्रकारकज्ञानं भ्रमः।' यथा शुक्तिकायां रजतज्ञानम्, रज्ज्वां च सर्पज्ञानम्। कस्यचिल्लोकस्य कं प्रत्येकविधप्रश्ने भ्रमवशेन तस्यान्यविधोत्तरदानं प्रमादः। यथा 'त्वं किं करोषि' इति प्रश्ने 'नाहमखाद'मित्याकारकोत्तरदानम्। प्रतारणेच्छावशवर्तिलोकोऽपरलोकमन्यविधं दृष्ट्वा बुद्ध्वाप्यन्यथाकथनं विप्रलिप्सा। यथा—कश्चिल्लोकः कस्यचित्कदाचारिणोऽसच्चरित्रनृपस्य कस्यचिदन्तिकस्य चान्तिके सदाचरितमद्यपानपरस्त्रीपरधनहरणादिविविधकदाचारान् दृष्ट्वा बुद्ध्वापि भवादृशो महात्मा, ज्ञानी, दानी राजा धनिको वा मया न कुत्रापि दृष्ट इत्याकारकविविधस्तुतिवाक्यैस्तस्य प्रतारणम्। इन्द्रियाणामसामर्थ्यमेव करणापाटवम्। विशेषतः श्रोत्रवाक्शक्त्योरनैपुण्यमेवेन्द्रियापाटवपदेन बोद्धव्यम्। तेनोत्तमाकारेणाश्रुत्वाकथयित्वा चायथोत्तरं ददात्येव। यथास्माभिः कस्मिंश्चिद्बधिरे मूके वा 'रामः क्वास्त' इति पृष्टे तन्मध्याद्बधिरो मूको वोदतरत् 'आम गृह एवे'ति। अत्रास्यायमर्थस्तदानीं तत्रासौ बधिरो यथावत्प्रश्नाक्षरश्रवणेनास्य प्रश्नो मम किमपि वस्तुविषयको व्यक्तिविषयको वा भवेदिति विभाव्योदतरत् 'आम गृह एवास्ते' इति। तथा मूकोऽपि 'रामो रामगृह एव तिष्ठती'त्याकारकोत्तरस्थले 'आम आमगृहे' इति कथितवान्। वस्तुत एतदुभय-

विधोत्तरस्य मिथ्यात्वमेव। तदुभयोक्तामशब्दप्रतिपाद्यप्रकृतार्थस्य भिन्नतया तद्विवक्षितार्थबोधविषय सदा तयोरप्रस्तुतत्वेन करणापाटवमादाय स्वभावतोऽन्यथास्थितवस्तुनोऽन्यथाकथनादिरूपविसम्वादवाक्यानामुत्पत्ति । अधिकाशस्थेऽपभ्रंशशब्दा अपीदृशीं गतिं लभन्त। यत्र स्वार्थपरपुरुषाणा स्वार्थानुकूलवस्तुष्वनुराग स्वप्रतिकूलवस्तुषु च विद्वेषो जायते तत्रैव निप्रलिप्सा सम्भवति। येषामिन्द्रियदोषमादाय ज्ञान शब्दव्यवहारो वा भवति तेषामेवानायासेन करणापाटवदोषो जायते। ईश्वरस्येच्छाज्ञानकृति शक्त्यादिविविधशक्तीना नित्यत्वमेव। ईश्वरस्यास्तित्व कथमपि नापलपि तव्यम्। तस्य नित्यज्ञानवत्त्वात्सदातृप्तत्वात्सर्वत्र परिपूर्णत्वाच्च। तथा सति यथार्थवाक्यबोध शाब्दप्रमा, शाब्दप्रमाकरण पदज्ञान च शब्दप्रमाण किन्तु न पदमात्रम्। मौनिपठितश्लोकादौ शाब्दबोधानुभवात्। मनसि श्लोकादिक चिन्तयन्नपि मौनी तदर्थानुसन्धान करोत्येव। शाब्दबोधे पदाना कारणत्वानङ्गीकारे शाब्दबोधानुपपत्ति । तत्र शब्दानुत्पत्त्या कारणत्वाभावात्। श्लोकानुसन्धानस्थलेऽपि स्मरणात्मकपदज्ञान सुलभ मेव। पदज्ञानस्य केवल श्रावणप्रत्यक्षात्मकज्ञानस्वरूपत्व नाङ्गीकर्त्तव्यम्। तथात्वाङ्गीकारे कविवाक्याद्यावर्थविषयिणीप्रतिभावशेन शब्दगवेषणामानस शब्दयोजनार्थसौष्ठवपर्यालोचनानां भूयो भूयोऽनुभवानुपपत्ते । इतोऽवगम्यते यथा कथचित्पदोपस्थितौ सत्या तस्यैव वृत्तिस्मृतिसहायेन 'हस्तिहस्तिपक न्यायेनार्थस्मरणादाकाङ्क्षायोग्यतासन्निधितात्पर्यज्ञानवशेन वाक्यार्थबोधो भवतीति सुधीभिरङ्गीकृतमित्यवधेयमिति शम्।

ग्रन्था काणादतथ्याकलननियमने सन्ति नानेति सन्त ।
कन्यावदूत्नयत्ने न भवतु भवतामादरो दीर्घवन्ध ॥

द्राक्षास्वादे सुदक्षा जहति किमु कदा हृद्यरस्यं रसालम् ।
प्राग्व मात्सर्यहीनाः सकृदपि विबुधा दृष्टिमापातयन्तु ।

क्षेत्रे श्रीपुरुषोत्तमे कलियुगे श्रातुं जनानुत्कले ।
नीलाद्रौ जगदीश्वरस्य वसतः श्रौतादिकर्मार्थिके ।
विद्वैर्गाङ्गकल्लोद्भवै र्भूपवरैरत्यर्थसम्मानिते ।
वंशे श्रोत्रियभूमिदेवनिलये जातोऽस्मि पौरोधसे ॥

बाणवेदवसुब्रह्मसम्मिते शाकहायने ।
माघशुक्लदशम्यां तु ग्रन्थोऽयं पूर्णतामगात् ।

श्रीजगन्नाथदेवपुरोहित-उपाध्यायविद्याविनोदकाव्य-मीमांसा-
स्मृतितीर्थ-पण्डित श्रीदामोदरमहापात्र शर्मशास्त्रि —
न्यायादर्शे प्रमाणपरिच्छेदः ।

समाप्तोऽयं ग्रन्थः ।